नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो
व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो
नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥२५॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्योऽ
अरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो
नमो महद्भ्योऽअर्भकेभ्यश्च वो नमः ॥२६॥

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः
कर्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो
नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥२७॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च
नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च ॥२८॥

नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च
नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥२९॥

नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च
नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च ॥३०॥

नमऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च
नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥३१॥

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च
नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥३२॥

नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च
नमः श्लोक्याय चावसान्याय च नमऽउर्वर्याय च खल्याय च ॥३३॥

नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च
नमऽआशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥३४॥

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑ व॒र्मिणे॑ च वरू॒थिने॑ च॒
नमः॑ श्रु॒ताय॑ च श्रुतसे॒नाय॑ च॒ नमो॑ दुन्दु॒भ्या॑य चाहन॒न्या॑य च ॥३५॥

नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑ चेषुधि॒मते॑ च॒
नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒ नमः॑ स्वायु॒धाय॑ च सु॒धन्व॑ने च ॥३६॥

नम॒ः स्रुत्या॑य च॒ पथ्या॑य च॒ नम॒ः काट्या॑य च॒ नीप्या॑य च॒
नम॒ः कुल्या॑य च सर॒स्या॑य च॒ नमो॑ नादे॒याय॑ च वैश॒न्ताय॑ च ॥३७॥

नम॒ः कूप्या॑य चाव॒ट्या॑य च॒ नमो॒ वीध्र्या॑य चात॒प्या॑य च॒
नमो॒ मेघ्या॑य च विद्यु॒त्या॑य च॒ नमो॒ वर्ष्या॑य चाव॒र्ष्याय॑ च ॥३८॥

नमो॒ वात्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्या॑य च वास्तु॒पाय॑ च॒
नम॒ः सोमा॑य च रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च ॥३९॥

नमः॑ श॒ङ्गवे॑ च पशु॒पत॑ये च॒ नम॑ऽउ॒ग्राय॑ च भी॒माय॑ च॒
नमो॑ऽग्रेव॒धाय॑ च दूरेव॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒
नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥४०॥

नमः॑ शम्भ॒वाय॑ च मयोभ॒वाय॑ च॒ नमः॑ शङ्क॒राय॑ च
मयस्क॒राय॑ च॒ नमः॑ शि॒वाय॑ च शि॒वत॑राय च ॥४१॥

नम॒ः पार्या॑य चावा॒र्या॑य च॒ नमः॑ प्र॒तर॑णाय चो॒त्तर॑णाय च॒
नम॒स्तीर्थ्या॑य च॒ कूल्या॑य च॒ नम॒ः शष्प्या॑य च॒ फेन्या॑य च ॥४२॥

नमः॑ सिक॒त्या॑य च प्रवा॒ह्या॑य च॒ नमः॑ कि॒ꣳशि॒लाय॑ च क्षय॒णाय॑ च॒
नमः॑ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नम॑ऽइरि॒ण्या॑य च प्रप॒थ्या॑य च ॥४३॥

नमो॒ व्रज्या॑य च॒ गोष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒
नमो॑ हृद॒य्या॑य च निवे॒ष्प्या॑य च॒ नमः॑ काट्या॑य च गह्वरे॒ष्ठाय॑ च ॥४४॥

नम॒ः शुष्क्या॑य च हरि॒त्या॑य च॒ नमः॑ पा॒ꣳस॒व्या॑य च र॒ज॒स्या॑य च॒
नमो॒ लोप्या॑य चोल॒प्या॑य च॒ नम॒ऽऊर्व्या॑य च॒ सूर्व्या॑य च ॥४५॥

नमः पुर्णाय च पर्णशदाय च नमऽउद्गुरमाणाय चाभिघ्नते
च नमऽआखिदते च प्रखिदते च नमऽइषुकृद्भ्यो धनुष्कृद्भ्यश्च
वो नमो नमो वः किरिकेभ्यो देवानाᳬ हृदयेभ्यो नमो
विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नमऽआनिर्हतेभ्यः ॥४६॥

द्रापेऽअन्धसस्पते दरिद्र नीललोहित ।
आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किं च नाममत् ॥४७॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामेऽअस्मिन्ननातुरम् ॥४८॥

या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ।
शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥४९॥

परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥५०॥

मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्षऽआयुधं निधाय कृत्तिं वसानऽआचर पिनाकं बिभ्रदागहि ॥५१॥

विकिरिद्र विलोहित नमस्तेऽअस्तु भगवः ।
यास्ते सहस्रᳬ हेतयोऽन्यमस्मन्निवपन्तु ताः ॥५२॥

सहस्राणि सहस्रशो बाह्वोस्तव हेतयः ।
तासामीशानो भगवः पराचीना मुखा कृधि ॥५३॥

असंख्याता सहस्राणि ये रुद्राऽअधि भूम्याम् ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५४॥

अस्मिन् महत्यर्णवेऽन्तरिक्षे भवाऽअधि ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५५॥

नीलग्रीवाः शितिकण्ठा दिवँ रुद्राऽउपश्रिताः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५६॥

नीलग्रीवाः शितिकण्ठाः शर्वाऽअधः क्षमाचराः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५७॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५८॥

ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥५९॥

ये पथां पथिरक्षय ऽ ऐलबृदा ऽ आयुर्युधः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥६०॥

ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥६१॥

येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥६२॥

यऽ एतावन्तश्च भूयाँसश्च दिशो रुद्रा वितस्थिरे ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥६३॥

[ २ ]

## अष्टादशोऽध्यायः[a] (१८)

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे
क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे
ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥ १ ॥

---

a) यज्ञद्वारकप्राप्यफलश्रावणः अग्निदेवत्यः प्रजापतेर् देवानां वाऽऽर्षम् ।

प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च मऽ आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥ २ ॥

ओजश्च मे सहश्च मऽआत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे परूᳪंषि च मे शरीराणि च मऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥३॥

ज्यैष्ठ्यं च मऽआधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धं च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥ ४ ॥

सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे विश्वं च मे महश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥ ५ ॥

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुखं च मे शयनं च मे सूषाश्च मे सुदिनं च मे यज्ञेन कल्पन्ताम् ॥ ६ ॥

यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च मे यज्ञेन कल्पन्ताम् ॥ ७ ॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥ ८ ॥

ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च मऽ औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥ ९ ॥

रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मेऽक्षितं च मेऽन्नं च मेऽक्षुच्च मे यज्ञेन कल्पन्ताम् ॥१०॥

वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथ्यं च म ऽ ऋद्धं च म ऽ ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम् ॥११॥

व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥१२॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥१३॥

अग्निश्च मऽआपश्च मे वीरुधश्च मऽओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्राम्याश्च मे पशवऽआरण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥१४॥

वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च मऽएमश्च मऽइत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् ॥१५॥

अग्निश्च म ऽ इन्द्रश्च मे सोमश्च म ऽ इन्द्रश्च मे सविता च मऽ इन्द्रश्च मे सरस्वती च म ऽ इन्द्रश्च मे पूषा च म ऽ इन्द्रश्च मे बृहस्पतिश्च म ऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१६॥

मित्रश्च म ऽ इन्द्रश्च मे वरुणश्च म ऽ इन्द्रश्च मे धाता च मऽ इन्द्रश्च मे त्वष्टा च म ऽ इन्द्रश्च मे मरुतश्च म ऽ इन्द्रश्च मे विश्वे च मे देवा ऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१७॥

पृथिवी च म ऽ इन्द्रश्च मे ऽन्तरिक्षं च म ऽइन्द्रश्च मे द्यौश्च मऽ इन्द्रश्च मे समाश्च मऽइन्द्रश्च मे नक्षत्राणि च म ऽ इन्द्रश्च मे दिशश्च म ऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥१८॥

अ ॐ शुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च मऽ उपाॐ शुश्च मेऽन्तर्यामश्च म ऽ ऐन्द्रवायवश्च मे मैत्रावरुणश्च म ऽ आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥१९॥

आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽ ऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥२०॥

स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च म ऽ आधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥२१॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥२२॥

व्रतं च म ऽ ऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रेऽऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥२३॥

एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च म ऽ एकादश च म ऽ एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे

नवदश च मऽएकविꣳशतिश्च मऽएकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽएकत्रिꣳशच्च मऽएकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥२४॥

चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विꣳशतिश्च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥२५॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे यज्ञेन कल्पन्ताम् ॥२६॥

पष्ठवाट् च मे पष्ठौही च मऽउक्षा च मे वशा च मऽऋषभश्च मे वेहच्च मेऽनड्वाँश्च मे धेनुश्च मे यज्ञेन कल्पन्ताम् ॥२७॥

वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा । इयं ते राण्मित्राय यन्तासि यमनऽऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याय ॥२८॥

आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पता<sup></sup>ꣳश्रोत्रं यज्ञेन कल्पतां वाग् यज्ञेन कल्पतां मनो यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां ज्योतिर्यज्ञेन कल्पता<sup></sup>ꣳ स्वर्यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् । स्तोमश्च यजुश्चऽऋक् च साम च बृहच्च रथन्तरं च । स्वर्देवाऽअगन्मामृताऽअभूम प्रजापतेः प्रजाऽअभूम वेट् स्वाहा ॥२९॥

[ २ ]

### द्वात्रिंशोऽध्यायः (३२)[a]

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म ताऽआपः स प्रजापतिः ॥ १ ॥

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परि जग्रभत् ॥ २ ॥

न तस्य प्रतिमाऽअस्ति यस्य नाम महद् यशः ।
हिरण्यगर्भऽइत्येष मा मा हिꣳसीदित्येषा यस्मान्न जातऽइत्येषः ॥ ३ ॥

एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः सऽउ गर्भेऽअन्तः ।
सऽएव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥४॥

यस्माज्जातं न पुरा किं चनैव य आबभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥५॥

येन द्यौरुग्रा पृथिवी च दृढा येन स्व स्तभितं येन नाकः ।
योऽअन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥६॥

यं क्रन्दसीऽअवसा तस्तभानेऽअभ्यैक्षेतां मनसा रेजमाने ।

[a]) परमदेव-संकीर्तन आत्म-देवत्यः स्वयम्भुनो ब्रह्मण आर्षम् ।

यत्राधि सूरऽउदितो विभाति कस्मै देवाय हविषा विधेम ।
आपो ह यद् बृहतीर्यश्चिदापः ॥७॥

वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम् ।
तस्मिन्निदꣳसं च वि चैति सर्वꣳ सऽओतः प्रोतश्च विभूः प्रजासु ॥८॥

प्र तद्वोचेदमृतं नु विद्वान् गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ॥९॥

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा ऽ अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥१०॥

परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्यात्मनात्मानमभि सं विवेश ॥११॥

परि द्यावापृथिवी सद्यऽइत्वा परि लोकान् परि दिशः परि स्वः ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत् ॥१२॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषꣳस्वाहा ॥१३॥

यां मेधां देवगणाः पितरश्चोपासते ।
तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा ॥१४॥

मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः ।
मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥१५॥

इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् ।
मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥१६॥

[ ४ ]

## चतुस्त्रिंशोऽध्यायः (३४)[a]

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

---

a) मनोदेवत्यः शिवसंकल्पस्याऽऽर्षम् ।

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऽऋते किं चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः साम यजूꣳषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिँश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिनऽइव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

[ ५ ]

## षट्त्रिंशोऽध्यायः (३६)[a]

ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये ।
वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु ।
शं नो भवतु भुवनस्य यस्पतिः ॥ २ ॥

भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ ३ ॥

कया नश्चित्रऽआभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ ४ ॥

कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥ ५ ॥

---

[a]) बृहस्पत्यादयो लिंगोक्ता देवताः, दधीच आथर्वणस्याऽऽर्षम् ।

अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः ॥ ६ ॥

कया त्वं नऽऊत्याभि प्र मन्दसे वृषन् ।
कया स्तोतृभ्यऽआभर ॥ ७ ॥

इन्द्रो विश्वस्य राजति । शं नोऽअस्तु द्विपदे शं चतुष्पदे ॥ ८ ॥

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं नऽइन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ९ ॥

शं नो वातः पवताᳪं शं नस्तपतु सूर्यः ।
शं नः कनिक्रदद्देवः पर्जन्योऽअभि वर्षतु ॥१०॥

अहानि शं भवन्तु नः शᳪं रात्रीः प्रति धीयताम ।
शं नऽइन्द्राग्नी भवतामवोभिः शं नऽइन्द्रावरुणा रातहव्या ।
शं नऽइन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥११॥

शं नो देवीरभिष्टयऽआपो भवन्तु पीतये ।
शं योरभि स्रवन्तु नः ॥१२॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः ॥१३॥

आपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन ।
महे रणाय चक्षसे ॥१४॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥१५॥

तस्माऽअरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥१६॥

[ ६ ]

## चत्वारिंशोऽध्यायः (४०)[a]

ई॒शा वा॒स्य॒मि॒दꣳ सर्वं॒ यत्किं च॒ जग॑त्यां॒ जग॑त् ।
तेन॑ त्य॒क्तेन॑ भुञ्जीथा॒ मा गृधः॒ कस्य॑ स्वि॒द्धन॑म् ॥ १ ॥

कु॒र्वन्ने॒वेह कर्मा॑णि जिजीवि॒षेच्छ॒तꣳ समाः॑ ।
ए॒वं त्वयि॒ नान्यथे॒तोऽस्ति॒ न कर्म॑ लिप्यते॒ नरे॑ ॥ २ ॥

अ॒सु॒र्या॒ नाम॒ ते लो॒काऽअ॒न्धेन॒ तम॒सावृ॑ताः ।
ताँस्ते प्रेत्यापि॑ गच्छन्ति॒ ये के चा॑त्म॒ह॒नो जनाः॑ ॥ ३ ॥

अने॑ज॒देकं॒ मन॑सो॒ जवी॑यो॒ नैन॑द्दे॒वाऽआ॑प्नुव॒न् पूर्व॒मर्श॑त् ।
तद्धाव॑तो॒ऽन्यानत्ये॑ति॒ तिष्ठ॒त् तस्मि॑न्न॒पो मा॑त॒रिश्वा॑ दधाति ॥ ४ ॥

तदे॑जति॒ तन्नैज॑ति॒ तद्दू॒रे तद्व॑न्ति॒के ।
तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः ॥ ५ ॥

यस्तु सर्वा॑णि भू॒तान्या॒त्मन्ने॒वानु॒पश्य॑ति ।
स॒र्व॒भू॒तेषु॒ चा॒त्मानं॒ तत॒ो न वि चि॑कित्सति ॥ ६ ॥

यस्मि॒न्त्सर्वा॑णि भू॒तान्या॒त्मैवाभू॑द्विजान॒तः ।
तत्र॒ को मोह॒ः कः शोक॑ऽएक॒त्वम॑नु॒पश्य॑तः ॥ ७ ॥

स पर्य॑गाच्छु॒क्रम॑का॒यम॑व्र॒णम॑स्ना॒वि॒रꣳ शु॒द्धम॑पापवि॒द्धम् ।
क॒विर्म॑नी॒षी परि॒भूः स्व॑य॒म्भूर्या॑थातथ्य॒तोऽर्था॒न् व्यद॑धाच्छाश्व॒तीभ्य॒ः
समा॑भ्यः ॥ ८ ॥

अ॒न्धं तम॒ः प्र वि॑शन्ति॒ येऽसं॑भूतिमु॒पास॑ते ।
तत॒ो भूय॑ऽइव॒ ते तम॒ो यऽउ॒ सम्भू॒त्याꣳ र॒ताः ॥ ९ ॥

अ॒न्यदे॒वाहुः सं॑भ॒वाद॒न्यदा॑हु॒रसं॑भवात् ।
इति॑ शुश्रु॒म धीरा॑णां॒ ये न॒स्तद्वि॑चचक्षि॒रे ॥ १० ॥

---

a) ईशोपनिषत्-कल्प आत्मदेवत्यो दधीच आथर्वणस्याऽऽर्षम् ।

सम्भूतिं च विनाशं च यस्तद्वेदोभयंसह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥११॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूयऽइव ते तमो यऽउ विद्यायांरताः ॥१२॥

अन्यदेवाहुर्विद्यायाऽअन्यदाहुरविद्यायाः ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥१३॥

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥१४॥

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ओ३म् क्रतो स्मर । क्लिबे स्मर । कृतं स्मर ॥१५॥

अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं विधेम ॥१६॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
योऽसावादित्ये पुरुषः सोऽसावहम् ।
ओ३म् खं ब्रह्म ॥१७॥

[ ७ ]

**प्रकीर्णा मन्त्राः**

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात्सत्यमुपैमि ॥१,५॥

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।
ज्योक् च सूर्यं दृशे ॥३,५४॥

प्रति पन्थामपद्महि स्वस्ति गामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥४,२९॥

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥१२,६२॥

मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥१३,२७॥

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ।
मधु द्यौरस्तु नः पिता ॥१३,२८॥

मधुमान्नो वनस्पतिर्मधुमाँ२ऽअस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥१३,२९॥

पृथिव्याऽ_हमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम् ॥१७,६७॥

स्वर्यन्तो नापेक्षन्तऽआ द्याꣳरोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारꣳसुविद्वाꣳसो वितेनिरे ॥१७,६८॥

ये समानाः समनसः पितरो यमराज्ये ।
तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥१९,४५॥

ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समाः ॥१९,४६॥

द्वे सृतीऽअशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥१९,४७॥

---

# उपनिषदः

[ १ ]

## केनोपनिषद्[a]

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचꣳस उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो
न विद्मो न विजानीमो यथैतदनुशिष्यात् ॥
अन्यदेव तद्विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ ३ ॥

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥

यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥ १ ॥

---

a) सामवेदीया ।

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् ।
यदस्य त्वं यदस्य च देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम् ॥ १ ॥

नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ २ ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥

प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥ २ ॥

[ २ ]

## कठोपनिषद्[a]

उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥

त꣡ ह कुमार꣡ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश ।
सोऽमन्यत ॥ २ ॥

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥ ३ ॥

स होवाच पितरम् । तत ! कस्मै मां दास्यसीति । द्वितीयं तृतीयम् ।
त꣡ होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
कि꣡ स्विद्यमस्य कर्त्तव्यं यन्मयाऽद्य करिष्यति ॥ ५ ॥

---

a) कृष्णयजुर्वेदीया ।

अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥

आशाप्रतीक्षे सङ्गतꣳ सूनृतां चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् ।
एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥८॥

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान्
वृणीष्व ॥ ९ ॥

शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभिमृत्यो ।
त्वत् प्रसृष्टं माभिवदेत् प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे ॥१०॥

यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखꣳ रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥११॥

स्वर्गे लोके न भयं किञ्चनास्ति, न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥१२॥

स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण ॥१३॥

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निन्नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ॥१४॥

येयम्प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥२०॥

देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्म्मः ।
अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥२१॥

देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २२ ॥

शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व स्वयञ्च जीव शरदो यावदिच्छसि ॥२३॥

एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥२४॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामाꣳश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्य्या नहीदृशा लम्भनीया मनुष्यैः ।
आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥२५॥

श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणाञ्जरयन्ति तेजः ।
अपि सर्वञ्जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥२६॥

न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥२७॥

अजीर्य्यताममृतानामुपेत्य जीर्य्यन्मर्त्यः क्वधःस्थः प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥२८॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो नान्यन्तस्मान्नचिकेता वृणीते ॥२९॥१॥

—०—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥१॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ॥२॥

स त्वं प्रियान् प्रियरूपाꣳश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैताꣳ सृङ्कां वित्तमयीमवाप्तो यस्याम्मज्जान्ति बहवो मनुष्याः ॥३॥

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सितन्नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥४॥

अविद्यायामन्तरे वर्त्तमानाः स्वयंधीराः पण्डितम्मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥५॥

न साम्परायः प्रतिभाति बालम्प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥६॥

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥८॥

नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।
यान्त्वमापः सत्यधृतिर्बतासि त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥९॥

तन्दुर्दर्शङ्गूढमनुप्रविष्टं गुहाहितङ्गह्वरेष्ठम्पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥१२॥

सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यञ्चरन्ति तत्ते पदꣳ सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥१५॥

एतद्ध्येवाक्षरम्ब्रह्म ह्येतदेवाक्षरम्परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१६॥

एतदालम्बनꣳ श्रेष्ठमेतदालम्बनम्परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥१७॥

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयम्पुराणो न हन्यते हन्यमाने शरीरे ॥१८॥

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥

आसीनो दूरं व्रजति शयानो याति सर्व्वतः ।
कस्तम्मदामदन्देवं मदन्यो ज्ञातुमर्हति ॥२०॥

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२१॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥२२॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥२३॥२॥

—o—

आत्मानं रथिनं विद्धि शरीरꣳ रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥३॥

इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥४॥

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥५॥

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥६॥

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति सꣳसारं चाधिगच्छति ॥७॥

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥८॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ॥९॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥१०॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥११॥

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥१३॥

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया दुर्गम्पथस्तत्कवयो वदन्ति ॥१४॥

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्यमगन्धवच्च यत् ।
अनाद्यनन्तम्महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥१५,३॥

—०—

पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ॥ ३ ॥

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१०॥

मनसैवेदमाप्तव्यन्नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥११॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥१२॥

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥१३॥

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्म्मान् पृथक् पश्यंस्तानेवानु विधावति ॥१४॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥४॥

—०—

पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ॥१॥

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥२॥

अस्य विस्रंस्समानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत् ॥४॥

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥

हन्त त इदम्प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥६॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥७॥

य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाणः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन । एतद्वै तत् ॥८॥

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥१०॥

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥११॥

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतन्नेतरेषाम् ॥१२॥

नित्योऽनित्यानाञ्चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१३॥

तदेतदिति मन्यन्तेऽनिर्देश्यम्परमं सुखम् ।
कथन्नु तद्विजानीयां किमु भाति विभाति वा ॥१४॥

न तत्र सूर्य्यो भाति न चन्द्रतारकन्नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्वं तस्य भासा सर्व्वमिदं विभाति ॥१५॥ ५॥

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्व्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ १ ॥

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥

भयादस्याग्निस्तपति भयात्तपति सूर्य्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥

यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके ।
यथाप्सु परीव ददृशे तथा गन्धर्व्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥

इन्द्रियाणाम्पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥ ८ ॥

न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषी मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमाङ्गतिम् ॥१०॥

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥११॥

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥१२॥

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥१३॥

यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१४॥

यदा सर्व्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥१५॥

शतञ्चैका च हृदयस्य नाड्यस्तासाम्मूर्द्धानमभि निःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विश्वङ्ङन्या उत्क्रमणे भवन्ति ॥१६॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्य्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥ ६॥

[ ३ ]

## प्रश्नोपनिषद्[a]

एषोऽग्निस्तपत्येष सूर्य्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी
रयिर्देवः सदसच्चामृतञ्च यत् ॥२,५॥

अरा इव रथनाभौ प्राणे सर्व्वं प्रतिष्ठितम् ।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥२,६॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।
तुभ्यं प्राणः प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥२,७॥

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।
ऋषीणाञ्चरितं सत्यमथर्व्वाङ्गिरसामसि ॥२,८॥

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।
त्वमन्तरिक्षे चरसि सूर्य्यस्त्वं ज्योतिषां पतिः ॥२,९॥

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥२,१०॥

व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः ।
वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः ॥२,११॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥२,१२॥

---

a) अथर्ववेदीया ।

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञाञ्च विधेहि न इति ॥२,१३॥

विज्ञानात्मा सह देवैश्च सर्व्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य स सर्व्वज्ञः सर्व्वमेवाविवेशेति ॥४,११॥

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनुविप्रयुक्ताः ।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥५,६॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते ।
तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति ॥५,७॥

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ।
तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥६,६॥

[ ४ ]

## मुण्डकोपनिषद्[a]

अथर्व्वणे यां प्रवदेत ब्रह्माथर्व्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥१,१,२॥

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥१,२,७॥

अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥१,२,८॥

अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥१,२,९॥

इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरञ्चाविशन्ति ॥१,२,१०॥

---

a) अथर्ववेदीया ।

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥१,२,११॥

परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१,२,१२॥

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥१,२,१३॥

—०—

तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥२,१,१॥

दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥२,१,२,॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥२,१,३॥

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥२,१,४॥

तस्मादृचः साम यजूꣳषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
सँवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥२,१,६॥

तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयाꣳसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥२,१,७॥

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त होमाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥२,१,८॥

अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥२,१,९॥

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥२,१,१०॥

आविः सन्निहितं गुहाचरन्नाम महत्पदमत्रैतत् समर्पितम् ।
एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥२,२,१॥

यदर्चिमद् यदणुभ्योऽणु यस्मिँल्लोका निहिता लोकिनश्च ।
तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः तदेतत् सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥२,२,२॥

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥२,२,३॥

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥२,२,४॥

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥२,२,५॥

अरा इव रथनाभौ संहता यत्र नाड्यः ।
स एषोऽन्तश्चरते बहुधा जायमानः ।
ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥२,२,६॥

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ।
मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।
तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥२,२,७॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥२,२,८॥

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥२,२,९॥
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥२,२,१०॥
ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥२,२,११॥

—०—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥३,१,१॥
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥३,१,२॥
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥३,१,३॥
सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥३,१,५॥
सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥३,१,६॥
बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥३,१,७॥
न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥३,१,८॥
एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥३,१,९॥

स वेदैतत् परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥३,२,१॥

कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥३,२,२॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥३,२,३॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥३,२,४॥

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥३,२,५॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥३,२,६॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥३,२,७॥

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥३,२,८॥

[ ४ ]

## श्वेताश्वतरोपनिषद्[a] ।

किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥१,१॥

कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।
संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ॥१,२॥

---

[a]) यजुर्वेदीया ।

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥१,३॥

तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥१,४॥

पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्त्रां पञ्चप्राणोर्म्मिं पञ्चबुद्ध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥१,५॥

सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥१,६॥

उद्गीतमेतत् परमं तु ब्रह्म तस्मिँस्त्रयं सुप्रतिष्ठाक्षरं च ।
अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥१,७॥

संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बुध्यते भोक्तृभावाज् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥१,८॥

ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥१,९॥

क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजनात् तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥१,१०॥

ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥१,११॥

एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥१,१२॥

वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥१,१३॥

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवत् ॥१,१४॥

तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः ।
एवमात्माऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥१,१५॥

सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्या तपोमूलं तद् ब्रह्मोपनिषत्परम् ।
तद्ब्रह्मोपनिषत्परम् ॥१,१६॥

—०—

अग्निर्यत्राभिमथ्यते वायुर्यत्राभियुज्यते ।
सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः ॥२,६॥

निरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निरुध्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांऽसि सर्वाणि भयावहानि ॥२,८॥

प्राणान् प्रपीड्येह संयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः ॥२,९॥

समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥२,१०॥

नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशिनाम् ।
एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥२,११॥

पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥२,१२॥

लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च ।
गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥२,१३॥

यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत् सुधातम् ।
तद्वात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥२,१४॥

यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥२,१५॥

एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥२,१६॥

यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश ।
य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥२,१७॥

—०—

य एको जालवानीशत ईशनीभिः सर्वांल्लोकानीशत ईशनीभिः ।
य एवैक उद्भवे सम्भवे च य एतद्विदुरमृतास्ते भवन्ति ॥३,१॥

एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशनीभिः ।
प्रत्यङ् जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि
गोपाः ॥३,२॥

यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥३,४॥

ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ईशं तं ज्ञात्वाऽमृता भवन्ति ॥३,७॥

यस्मात्परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥३,९॥

ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥३,१०॥

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः ॥३,११॥

महान् प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तकः ।
सुनिर्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः ॥३,१२॥

सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥३,१६॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥३,१७॥

नवद्वारे पुरे देही हंसो लेलायते बहिः ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥३,१८॥

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥३,१९॥

वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥३,२१॥

—०—

य एको वर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति ।
वि चैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥४,१॥

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥४,५॥

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥४,७॥

छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः ॥४,९॥

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥४,१०॥

यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च वि चैति सर्वम् ।
तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥४,११॥

यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः ।
य ईशेऽस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥४,१३॥

सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥४,१४॥

स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशां-
श्छिनत्ति ॥४,१५॥

घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥४,१६॥

एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः ।
हृदा मनीषी मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥४,१७॥

यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥४,१८॥

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥४,१९॥

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम ।
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥४,२०॥

—०—

द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे ।
क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥५,१॥

यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ॥५,२॥

एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संचरत्येष देवः ।
भूयः सृष्ट्वा यतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥५,३॥

सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यद्वनड्वान् ।
एवं स देवो भगवान् वरेण्यो योनिस्वभावान् अधितिष्ठत्येकः ॥५,४॥

यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेद् यः ।
सर्वमेतद् विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनियोजयेद् यः ॥५,५॥

तद् वेदगुह्योपनिषत्सु गूढं तद् ब्रह्मा वेदयते ब्रह्मयोनिम् ।
ये पूर्वं देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥५,६॥

गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः ॥५,७॥

अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रोऽप्यपरोपि दृष्टः ॥५,८॥

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥५,९॥

नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥५,१०॥

संकल्पनस्पर्शनदृष्टिमोहैर्ग्रासाम्बुवृष्ट्या चात्मविवृद्धजन्म ।
कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते ॥५,११॥

स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ॥५,१२॥

अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥५,१३॥

भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥५,१४॥

—०—

स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः ।
देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥६,१॥

येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः ।
तेनेशितं कर्म्म विवर्त्तते ह पृथिव्यप्तेजोऽनिलखानि चिन्त्यम् ॥६,२॥

तत्कर्म कृत्वा विनिवर्त्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥६,३॥

आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद् यः ।
तेषामभावे कृतकर्म्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥६,४॥

आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः ।
तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥६,५॥

स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।
धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम ॥६,६॥

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ॥६,७॥

न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥६,८॥

न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥६,९॥

यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।
देव एकः स्वमावृणोति स नो दधातु ब्रह्माव्ययम् ॥६,१०॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥६,११॥

एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥६,१२॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥६,१३॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्वमिदं विभाति ॥६,१४॥

एको हꣳसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः ।
तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥६,१५॥

स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद् यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संꣳसारमोक्षस्थितिबन्धहेतुः ॥६,१६॥

स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥६,१७॥

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तꣳ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥६,१८॥

निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परꣳ सेतुं दग्धेन्धनमिवानलम् ॥६,१९॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥६,२०॥

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥६,२२॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥६,२३॥

## कैवल्योपनिषद्[a]

अथाऽऽश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच —

अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् ।
यथाऽचिरात् सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥१,१॥

तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि ॥१,२॥

---

a) अथर्ववेदीया ।

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥१,३॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥१,४॥

विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ।
अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥१,५॥

हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥१,६॥

तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥१,७॥

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥१,८॥

स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥१,९॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥१,१०॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात् पापं दहति पण्डितः ॥१,११॥

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ॥१,१२॥

स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥१,१३॥

पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततः सुजातं सकलं विचित्रम् ।
आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च ॥१,१४॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥१,१५॥

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं स त्वमेव त्वमेव तत् ॥१,१६॥

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥१,१७॥

त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥१,१८॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ॥१,१९॥

[ ६ ]

## सर्वसारोपनिषद्[a]

नाहं भवाम्यहं देवो नेन्द्रियाणि दशैव तु ।
न बुद्धिर्न मनः शश्वन्नाहंकारस्तथैव च ॥ १ ॥

अप्राणो ह्यमना शुभ्रो बुद्ध्यादीनां हि सर्वदा ।
साक्ष्यहं सर्वदा नित्यश्चिन्मात्रोऽहं न संशयः ॥ २ ॥

नाहं कर्त्ता नैव भोक्ता प्रकृतेः साक्षिरूपकः ।
मत्सान्निध्यात् प्रवर्त्तन्ते देहाद्या अजडा इव ॥ ३ ॥

स्थाणुर्नित्यः सदानन्दः शुद्धो ज्ञानमयोऽमलः ।
आत्माहं सर्वभूतानां विभुः साक्षी न संशयः ॥ ४ ॥

---

a) कृष्णयजुर्वेदीया ।

ब्रह्मैवाहं सर्ववेदान्तवेद्यं नाहं वेद्यं व्योमवातादिरूपम् ।
रूपं नाहं नाम नाहं न कर्म ब्रह्मैवाहं सच्चिदानन्दरूपम् ॥ ५ ॥

नाहं देहो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासे कुतो मे ।
नाहं चेतः शोकमोहौ कुतो मे नाहं कर्त्ता बन्धमोक्षौ कुतो मे ॥ ६ ॥

[ ७ ]

## आत्मबोधोपनिषद्[a]

विवेकयुक्तिबुद्ध्याहं जानाम्यात्मानमद्वयम् ।
तथापि बन्धमोक्षादिव्यवहारः प्रतीयते ॥११॥
निवृत्तोऽपि प्रपञ्चो मे सत्यवद्भाति सर्वदा ।
सर्पादौ रज्जुसत्तेव ब्रह्मसत्तैव केवलम् ॥१२॥
प्रपञ्चाधाररूपेण वर्त्ततेऽतो जगन्नहि ।
यथेक्षुरससंव्याप्ता शर्करा वर्तते तथा ॥१३॥

अद्वयब्रह्मरूपेण व्याप्तोऽहं वै जगत्त्रयम् ।
ब्रह्मादिकीटपर्य्यन्ताः प्राणिनो मयि कल्पिताः ॥१४॥

बुद्बुदादिविकारान्तस्तरङ्गः सागरे यथा ।
तरङ्गस्थं द्रवं सिन्धुर्न वाञ्छति यथा तथा ॥१५॥

विषयानन्दवाञ्छा मे माभूदानन्दरूपतः ।
दारिद्र्याशा यथा नास्ति सम्पन्नस्य तथा मम ॥१६॥

ब्रह्मानन्दे निमग्नस्य विषयाशा न तद्भवेत् ।
विषं दृष्ट्वाऽमृतं दृष्ट्वा विषं त्यजति बुद्धिमान् ॥१७॥

आत्मानमपि दृष्ट्वाहमनात्मानं त्यजाम्यहम् ।
घटावभासको भानुर्घटनाशे न नश्यति ॥१८॥

देहावभासकः साक्षी देहनाशे न नश्यति ।
न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ॥१९॥

---

[a]) ऋग्वेदीया ।

मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ।
प्राणाश्चलन्तु तद्धर्मैः कामैर्वा हन्यतां मनः ॥२०॥

आनन्दबुद्धिपूर्णस्य मम दुःखं कथं भवेत् ।
आत्मानमञ्जसा वेद्मि क्वाप्यज्ञानं पलायितम् ॥२१॥

कर्त्तृत्वमद्य मे नष्टं कर्त्तव्यं वापि न क्वचित् ।
ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः ॥२२॥

स्थूलदेहगता एते स्थूलाद्भिन्नस्य मे नहि ।
क्षुत्पिपासाऽऽन्ध्यबाधिर्यकामक्रोधादयोऽखिलाः ॥२३॥

लिङ्गदेहगता एते ह्यलिङ्गस्य न सन्ति हि ।
जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥२४॥

न सन्ति मम नित्यस्य निर्विकारस्वरूपिणः ।
उलूकस्य यथा भानुरन्धकारः प्रतीयते ॥२५॥

स्वप्रकाशे परानन्दे तमो मूढस्य जायते ।
चक्षुर्दृष्टिनिरोधेऽभ्रैः सूर्यो नास्तीति मन्यते ॥२६॥

तथाज्ञानावृतो देही ब्रह्म नास्तीति मन्यते ।
यथाऽमृतं विषाद्भिन्नं विषदोषैर्न लिप्यते ॥२७॥

न स्पृशामि जडाद्भिन्नो जडदोषान् प्रकाशतः ।
स्वल्पापि दीपकणिका बहुलं नाशयेत्तमः ॥२८॥

स्वल्पोऽपि बोधो निबिडं बहुलं नाशयेत्तमः ।
कालत्रये यथा सर्पो रज्जौ नास्ति तथा मयि ॥२९॥

अहंकारादिदेहान्तं जगन्नास्त्यहमद्वयः ।
चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम ॥३०॥

आनन्दत्वान्न मे दुःखमज्ञानाद्भाति सत्यवत् ॥

[ ८ ]

## योगतत्त्वोपनिषद्[a]

योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥

विष्णुर्नाम महायोगी महाभूतो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ॥ २ ॥

तमाराध्य जगन्नाथं प्रणिपत्य पितामहः ।
पप्रच्छ योगतत्त्वं मे ब्रूहि चाष्टाङ्गसंयुतम् ॥ ३ ॥

तमुवाच हृषीकेशो वक्ष्यामि शृणु तत्त्वतः ।
सर्वे जीवाः सुखैर्दुःखैर्मायाजालेन वेष्टिताः ॥ ४ ॥

तेषां मुक्तिकरं मार्गं मायाजालनिकृन्तनम् ।
जन्ममृत्युजराव्याधिनाशनं मृत्युतारकम् ॥ ५ ॥

नानामार्गैस्तु दुष्प्रापं कैवल्यं परमं पदम् ।
पतिताः शास्त्रजालेषु प्रज्ञया तेन मोहिताः ॥ ६ ॥

अनिर्वाच्यं पदं वक्तुं न शक्यं तैः सुरैरपि ।
स्वात्मप्रकाशरूपं तत् किं शास्त्रेण प्रकाश्यते ॥ ७ ॥

निष्कलं निर्मलं शान्तं सर्वातीतं निरामयम् ।
तदेव जीवरूपेण पुण्यपापफलैर्वृतम् ॥ ८ ॥

परमात्मपदं नित्यं तत्कथं जीवतां गतम् ।
सर्वभावपदातीतं ज्ञानरूपं निरञ्जनम् ॥ ९ ॥

वारिवत्स्फुरितं तस्मिँस्तत्राहंकृतिरुत्थिता ।
पञ्चात्मकमभूत्पिण्डं धातुबद्धं गुणात्मकम् ॥१०॥

---

a) कृष्णयजुर्वेदीया ।

सुखदुःखैः समायुक्तं जीवभावनया कुरु ।
तेन जीवाभिधा प्रोक्ता विशुद्धैः परमात्मनि ॥११॥

कामक्रोधभयं चापि मोहलोभमदो रजः ।
जन्म मृत्युश्च कार्पण्यं शोकस्तन्द्रा क्षुधा तृषा ॥१२॥

तृष्णा लज्जा भयं दुःखं विषादो हर्ष एव च ।
एभिर्दोषैर्विनिर्मुक्तः स जीवः केवलो मतः ॥१३॥

तस्माद्दोषविनाशार्थमुपायं कथयामि ते ।
योगहीनं कथं ज्ञानं मोक्षदं भवति ध्रुवम् ॥१४॥

योगो हि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।
तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥१५॥

अज्ञानादेव संसारो ज्ञानादेव विमुच्यते ।
ज्ञानस्वरूपमेवादौ ज्ञानं ज्ञेयैकसाधनम् ॥१६॥

ज्ञातं येन निजं रूपं कैवल्यं परमं पदम् ।
निष्कलं निर्मलं साक्षात्सच्चिदानन्दरूपकम् ॥१७॥

उत्पत्तिस्थितिसंहारस्फूर्तिज्ञानविवर्जितम् ।
एतज्ज्ञानमिति प्रोक्तमथ योगं ब्रवीमि ते ॥१८॥

योगो हि बहुधा ब्रह्मन्भिद्यते व्यवहारतः ।
मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगतः ॥१९॥

आरम्भश्च घटश्चैव तथा परिचयः स्मृतः ।
निष्पत्तिश्चेत्यवस्था च सर्वत्र परिकीर्तिता ॥२०॥

—:०:—

# भगवद्गीता

## प्रथमोऽध्यायः

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सोमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च बहवः शूराः मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥११॥

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥१८॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥२०॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥२५॥

तत्रापश्यत् स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥२६॥

श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥२७॥

कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।
दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥२८॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥

गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥३२॥

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥३३॥

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ॥३४॥

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥३५॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥३६॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३९॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥

अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥४१॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ॥
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥

अहो बत महत् पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

संजय उवाच —

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

## द्वितीयोऽध्यायः

संजय उवाच —

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

भगवान् उवाच —

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

अर्जुन उवाच —

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥५॥

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥

न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥

संजय उवाच —

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥

भगवान् उवाच —

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूँश्च नानुशोचन्ति पण्डिताः ॥११॥

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥१७॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद् युध्यस्व भारत ॥१८॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता[a] वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥
वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥२६॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥
आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥
देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥
स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥३१॥

---

a) तु. मधुसूदन-तिलक-प्रभृतयः; वैतु. शङ्करः =अभ° इति ?

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं नं करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥

भयाद् रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥४७॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥

अर्जुन उवाच —

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

भगवान् उवाच —

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥६२॥

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥६५॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥

विहाय कामान् यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥७१॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२॥



# संहिताः

## [ १ ]

## अथर्ववेदः

### अतिथि-यज्ञः ९, ६

यो विद्याद् ब्रह्म प्रत्यक्षं परूंषि यस्य संभारा ऋचो यस्यानू-
क्यम् ॥ १ ॥ सामानि यस्य लोमानि यजुर्हृदयमुच्यते परिस्तरणमि-
द्धविः ॥ २ ॥ यद्वा अतिथिपतिरतिथीन् प्रतिपश्यति देवयजनं
प्रेक्षते ॥ ३ ॥ यदभिवदति दीक्षामुपैति यदुदकं याचत्यपः
प्र णयति ॥ ४ ॥ या एव यज्ञ आपः प्रणीयन्ते ता एव ताः ॥ ५ ॥
यत्तर्पणमाहरन्ति य एवाग्नीषोमीयः पशुर्बध्यते स एव सः ॥ ६ ॥ यदा-
वसथान् कल्पयन्ति सदोहविर्धानान्येव तत् कल्पयन्ति ॥ ७ ॥ यदुपस्तृणन्ति
बर्हिरेव तत् ॥ ८ ॥ यदुपरिशयनमाहरन्ति स्वर्गमेव तेन लोकमव
रुन्द्धे ॥ ९ ॥ यत्कशिपूपबर्हणमाहरन्ति परिधय एव ते ॥ १० ॥
यदाञ्जनाभ्यञ्जनमाहरन्त्याज्यमेव तत् ॥ ११ ॥ यत्पुरा परिवेषात् खाद-
माहरन्ति पुरोडाशावेव तौ ॥ १२ ॥ यदशनकृतं ह्वयन्ति हविष्कृतमेव
तद्ध्वयन्ति ॥ १३ ॥ ये व्रीहयो यवा निरुप्यन्तेऽशव एव ते ॥ १४ ॥
यान्युलूखलमुसलानि ग्रावाण एव ते ॥ १५ ॥ शूर्पं पवित्रं तुषा
ऋजीषाभिषवणीरापः ॥ १६ ॥ स्रुग्दर्विर्नेक्षणमायवनं द्रोणकलशाः
कुम्भ्यो वायव्यानि पात्राणीयमेव कृष्णाजिनम् ॥ १७ ॥ यजमान-
ब्राह्मणं वा एतदतिथिपतिः कुरुते यदाहार्याणि प्रेक्षत इदं भूया३
इदा३मिति ॥ १८ ॥ यदाह भूय उद्धरेति प्राणमेव तेन वर्षीयांसं

कुरुते ॥ १९ ॥ उप हरति हवींष्या सादयति ॥ २० ॥ तेषामासन्ना-
नामतिथिरात्मन्जुहोति ॥ २१ ॥ स्रुचा हस्तेन प्राणे यूपे स्रुक्कारेण वषट्-
कारेण ॥ २२ ॥ एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति
यदतिथयः ॥ २३ ॥ स य एवं विद्वान्न द्विषन्नश्नीयान्न द्विषतोऽन्नमश्नी-
यान्न मीमांसितस्य न मीमांसमानस्य ॥ २४ ॥ सर्वो वा एष जग्धपाप्मा
यस्यान्नमश्नन्ति ॥ २५ ॥ सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं
नाश्नन्ति ॥ २६ ॥ सर्वदा वा एष युक्तग्रावार्द्रपवित्रो विततध्वर आहृत-
यज्ञक्रतुर्य उपहरति ॥ २७ ॥ प्राजापत्यो वा एतस्य यज्ञो विततो य
उपहरति ॥ २८ ॥ प्रजापतेर्वा एष विक्रमाननुविक्रमते य
उपहरति ॥ २९ ॥ योऽतिथीनां स आहवनीयो यो वेश्मनि
स गार्हपत्यो यस्मिन्पचन्ति स दक्षिणाग्निः ॥ ३० ॥
इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३१ ॥
पयश्च वा एष रसं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३२ ॥
ऊर्जां च वा एष स्फातिं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३३ ॥
प्रजां च वा एष-पशूंश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३४ ॥
कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३५ ॥
श्रियं च वा एष संविदं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥ ३६ ॥
एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात्पूर्वो नाश्नीयात् ॥ ३७ ॥ अशिता-
वत्यतिथावश्नीयाद्यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद् व्रतम् ॥ ३८ ॥
एतद्वा उ स्वादीयो यदधिगवं क्षीरं वा मांसं वा तदेव
नाश्नीयात् ॥ ३९ ॥ स य एवं विद्वान् क्षीरमुपसिच्योपहरति
यावदग्निष्टोमेनेष्ट्वा सुसमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥ ४० ॥
स य एवं विद्वान्त्सर्पिरुपसिच्योपहरति । यावदतिरात्रेणेष्ट्वा
सुसमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥ ४१ ॥ स य एवं विद्वान्

मधूपसिच्योपहरति । यावत् सत्रसवेनेष्ट्वा सुसमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥ ४२ ॥ स य एवं विद्वान् मांसमुपसिच्योपहरति । यावद् द्वादशाहेनेष्ट्वा सुसमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥ ४३ ॥ स य एवं विद्वानुदकमुपसिच्योपहरति । प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति य एवं विद्वानुदकमुपसिच्योपहरति ॥ ४४ ॥ तस्मा उषा हिङ्कृणोति सविता प्र स्तौति । बृहस्पतिरूर्जयोद्गायति त्वष्टा पुष्ट्या प्रति हरति विश्वे देवा निधनम् । निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ ४५ ॥ तस्मा उद्यन्त्सूर्यो हिङ्कृणोति संगवः प्र स्तौति । मध्यन्दिन उद्गायत्यपराह्णः प्रति हरत्यस्तंयन्निधनम् । निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ ४६ ॥ तस्मा अभ्रो भवन् हिङ्कृणोति स्तनयन् प्र स्तौति । विद्योतमानः प्रतिहरति वर्षन्नुद्गायत्युद्गृह्णन् निधनम् । निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद । अतिथीन् प्रति पश्यति हिङ्कृणोत्यभि वदति प्रस्तौत्युदकं याचत्युद्गायति ॥ ४७ ॥ उपहरति प्रति हरत्युच्छिष्टं निधनम् । निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ ४८ ॥ यत् क्षत्तारं ह्वयत्या श्रावयत्येव तत् ॥ ४९ ॥ यत् प्रतिशृणोति प्रत्याश्रावयत्येव तत् ॥ ५० ॥ यत् परिवेष्टारः पात्रहस्ताः पूर्वे चापरे च प्रपद्यन्ते चमसाध्वर्यव एव ते ॥ ५१ ॥ तेषां न कश्चनाहोता ॥५२॥ यद्वा अतिथिपतिरतिथीन् परिविष्य गृहानुपोदैत्यवभृथमेव तदुपावैति ॥ ५३ ॥ यत्सभागयति दक्षिणाः सभागयति यदनुतिष्ठत उदवस्यत्येव तत् ॥ ५४ ॥ स उपहूतः पृथिव्यां भक्षयत्युपहूतस्तस्मिन् यत् पृथिव्यां विश्वरूपम् ॥ ५५ ॥ स उपहूतोऽन्तरिक्षे भक्षयत्युपहूतस्तस्मिन् यदन्तरिक्षे विश्वरूपम् ॥ ५६ ॥ स

उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन् यद्दिवि विश्वरूपम् ॥ ५७ ॥
स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन् यद्देवेषु विश्वरूपम् ॥ ५८ ॥
स उपहूतो लोकेषु भक्षयत्युपहूतस्तास्मिन् यल्लोकेषु विश्वरूपम् ॥ ५९ ॥
स उपहूत उपहूतः ॥ ६० ॥ आप्नोतीमं लोकमाप्नोत्यमुम् ॥ ६१ ॥
ज्योतिष्मतो लोकाञ्जयति य एवं वेद ॥ ६२ ॥

## व्रात्य-महिमा १५,१

व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत् ॥ १ ॥ स
प्रजापतिः सुवर्णमात्मन्नपश्यत्तत्प्राजनयत् ॥ २ ॥ तदेकमभवत्
तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् तद् ब्रह्माऽ-
भवत् तत् तपोऽभवत् तत् सत्यमभवत् तेन प्राजायत ॥ ३ ॥ सोऽवर्धत
स महानभवत् स महादेवोऽभवत् ॥ ४ ॥ स देवानामीशां पर्यैत्
स ईशानोऽभवत् ॥ ५ ॥ स एकव्रात्योऽभवत् स धनुरादत्त तदेवेन्द्र-
धनुः ॥ ६ ॥ नीलमस्योदरं लोहितं पृष्ठम् ॥ ७ ॥ नीलेनैवाप्रियं भ्रातृव्यं
प्रोर्णोति लोहितेन द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति ॥ ८ ॥

१५,२

स उदतिष्ठत् स प्राचीं दिशमनु व्यचलत् ॥ १ ॥ तं
बृहच्च रथन्तरं चादित्याश्च विश्वे च देवा अनुव्यचलन् ॥ २ ॥
बृहते च वै स रथन्तराय चादित्येभ्यश्च विश्वेभ्यश्च देवेभ्य आ वृश्चते
य एवं विद्वांसं व्रात्यमुपवदति ॥ ३ ॥ बृहतश्च वै स रथन्तरस्य चादित्यानां
च विश्वेषां च देवानां प्रियं धाम भवति य एवं वेद ॥ ४ ॥ तस्य
प्राच्यां दिशि श्रद्धा पुंश्चली मित्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री
केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ ५ ॥ भूतं च भविष्यच्च
परिष्कन्दौ मनो विपथम् ॥ ६ ॥ मातरिश्वा च पवमानश्च विपथवाहौ

वातः सारथी रेष्मा प्रतोदः कीर्तिश्च यशश्च पुरःसरौ ॥ ७ ॥ ऐनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ ८ ॥ स उदतिष्ठत् स दक्षिणां दिशमनु व्यचलत् ॥ ९ ॥ तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥ १० ॥ यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ ११ ॥ यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ॥ १२ ॥ तस्य दक्षिणायां दिश्युषाः पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ १३ ॥ अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम् । मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः कीर्त्तिश्च यशश्च पुरस्सरौ । ऐनं कीर्त्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ १४ ॥ स उदतिष्ठत् स प्रतीचीं दिशमनुव्यचलत् ॥ १५ ॥ तं वैरूपं च वैराजं चापश्च वरुणश्च राजानुव्यचलन् ॥ १६ ॥ वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ १७ ॥ वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च राज्ञः प्रियं धाम भवति य एवं वेद ॥ १८ ॥ तस्य प्रतीच्यां दिशीरा पुंश्चली हसो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ १९ ॥ अहश्च रात्री च परिष्कन्दौ मनो विपथम् । मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः कीर्त्तिश्च यशश्च पुरस्सरौ । ऐनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ २० ॥ स उदतिष्ठत् स उदीचीं दिशमनुव्यचलत् ॥ २१ ॥ तं श्यैतं च नौधसं च सप्तर्षयश्च सोमश्च राजानुव्यचलन् ॥ २२ ॥ श्यैताय च वै स नौधसाय च सप्तर्षिभ्यश्च

सोमाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ २३ ॥ श्यैतस्य च वै स नौधसस्य च सप्तर्षीणां च सोमस्य च राज्ञः प्रियं धाम भवति य एवं वेद ॥ २४ ॥ तस्योदीच्यां दिशि विद्युत् पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ २५ ॥ श्रुतं च विश्रुतं च परिष्कन्दौ मनो विपथम् ॥ २६ ॥ मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः कीर्तिश्च यशश्च पुरस्सरौ ॥ २७ ॥ ऐनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ २८ ॥

१५,३

स संवत्सरमूर्ध्वोऽतिष्ठत् तं देवा अब्रुवन् व्रात्य किं नु तिष्ठसीति ॥ १ ॥ सोऽब्रवीदासन्दीं मे सं भरन्त्विति ॥ २ ॥ तस्मै व्रात्यायासन्दीं समभरन् ॥ ३ ॥ तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ॥ ४ ॥ बृहच्च रथन्तरं चानूच्ये३आस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये ॥ ५ ॥ ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ॥ ६ ॥ वेद आस्तरणं ब्रह्मोपबर्हणम् ॥ ७ ॥ सामासाद उद्गीथोऽपश्रयः ॥ ८ ॥ तामासन्दीं व्रात्य आरोहत् ॥ ९ ॥ तस्य देवजनाः परिष्कन्दा आसन्त्संकल्पाः प्रहाय्या३विश्वानि भूतान्युपसदः ॥ १० ॥ विश्वान्येवास्य भूतान्युपसदो भवन्ति य एवं वेद ॥ ११ ॥

१५,४

तस्मै प्राच्या दिशः ॥ १ ॥ वासन्तौ मासौ गोप्तारावकुर्वन् बृहच्च रथन्तरं चानुष्ठातारौ ॥ २ ॥ वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च रथन्तरं चानु तिष्ठतो य एवं वेद ॥ ३ ॥ तस्मै दक्षिणाया दिशः ॥ ४ ॥ ग्रैष्मो मासौ गोप्तारावकुर्वन् यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ॥ ५ ॥ ग्रैष्मावेनं मासौ दक्षिणाया दिशो

गोपायतो यज्ञायज्ञियं च वामदेव्यं चानु तिष्ठतो य एवं वेद ॥ ६ ॥ तस्मै प्रतीच्या दिशः ॥ ७ ॥ वार्षिकौ मासौ गोप्तारावकुर्वन् वैरूपं च वैराजं चानुष्ठातारौ ॥ ८ ॥ वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च वैराजं चानु तिष्ठतो य एवं वेद ॥ ९ ॥ तस्मा उदीच्या दिशः ॥ १० ॥ शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं च नौधसं चानुष्ठातारौ ॥ ११ ॥ शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं च नौधसं चानु तिष्ठतो य एवं वेद ॥ १२ ॥ तस्मै ध्रुवाया दिशः ॥ १३ ॥ हैमनौ मासौ गोप्तारावकुर्वन् भूमिं चाग्निं चानुष्ठातारौ ॥ १४ ॥ हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो भूमिश्चाग्निश्चानु तिष्ठतो य एवं वेद ॥ १५ ॥ तस्मा ऊर्ध्वाया दिशः ॥ १६ ॥ शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ ॥ १७ ॥ शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु तिष्ठतो य एवं वेद ॥ १८ ॥

१५,५

तस्मै प्राच्या दिशो अन्तर्देशाद् भवमिष्वासमनुष्ठातारमकुर्वन् ॥ १ ॥ भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति ॥ २ ॥ नैनं शर्वो न भवो नेशानो नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥ ३ ॥ तस्मै दक्षिणाया दिशो अन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥ ४ ॥ शर्व एनमिष्वासो दक्षिणाया दिशो अन्तर्देशादनुष्ठातानुतिष्ठति । नैनं शर्वो न भवो नेशानो नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥ ५ ॥ तस्मै प्रतीच्या दिशो अन्तर्देशात् पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ॥ ६ ॥ पशुपतिरेनमिष्वासः प्रतीच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति । नैनं शर्वो न भवो नेशानो नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥ ७ ॥ तस्मा उदीच्या दिशो अन्तर्देशा-

दुग्रं देवमिष्वासमनुष्ठातारमकुर्वन् ॥ ८ ॥ उग्र एनं देव इष्वास उदीच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति। नैनं शर्वो न भवो नेशानो नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥ ९ ॥ तस्मै ध्रुवाया दिशो अन्तर्देशाद् रुद्रमिष्वासमनुष्ठातारमकुर्वन् ॥ १० ॥ रुद्र एनमिष्वासो ध्रुवाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति । नैनं शर्वो न भवो नेशानो नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥ ११ ॥ तस्मा ऊर्ध्वाया दिशो अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥ १२ ॥ महादेव एनमिष्वास ऊर्ध्वाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति । नैनं शर्वो न भवो नेशानो नास्य पशून्न समानान् हिनस्ति य एवं वेद ॥ १३ ॥ तस्मै सर्वेभ्यो अन्तर्देशेभ्य ईशानमिष्वासमनुष्ठातारमकुर्वन् ॥ १४ ॥ ईशान एनमिष्वासः सर्वेभ्यो अन्तर्देशेभ्योऽनुष्ठातानु तिष्ठति ॥ १५ ॥ नैनं शर्वो न भवो नेशानो नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥ १६ ॥

१५६

स ध्रुवां दिशमनु व्यचलत् ॥ १ ॥ तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचलन् ॥ २ ॥ भूमेश्च वै सोऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां च वीरुधां च प्रियं धाम भवति य एवं वेद ॥ ३ ॥ स ऊर्ध्वां दिशमनु व्यचलत् ॥ ४ ॥ तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानु व्यचलन् ॥ ५ ॥ ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च नक्षत्राणां च प्रियं धाम भवति य एवं वेद ॥ ६ ॥ स उत्तमां दिशमनु व्यचलत् ॥ ७ ॥ तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ॥ ८ ॥ ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ॥ ९ ॥ स बृहतीं

दिशमनु व्यचलत् ॥ १० ॥ तमितिहासश्च पुराणं च गाथाश्च
नाराशंसीश्चानुव्यचलन् ॥ ११ ॥ इतिहासस्य च वै स पुराणस्य
च गाथानां च नाराशसीनां च प्रियं धाम भवति य एवं वेद ॥ १२ ॥
स परमां दिशमनु व्यचलत् ॥ १३ ॥ तमाहवनीयश्च गार्हपत्यश्च
दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥ १४ ॥
आहवनीयस्य च वै स गार्हपत्यस्य च दाक्षिणाग्नेश्च यज्ञस्य च
यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ॥ १५ ॥
सोऽनादिष्टां दिशमनु व्यचलत् ॥ १६ ॥ तमृतवश्चार्तवाश्च लोकाश्च
लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चानुव्यचलन् ॥ १७ ॥
ऋतूनां च वै स आर्तवानां च लोकानां च लौक्यानां च मासानां
चार्धमासानां चाहोरात्रयोश्च प्रियं धाम भवति य एवं वेद ॥ १८ ॥
सोऽनावृत्तां दिशमनु व्यचलत् ततो नावर्त्स्यन्नमन्यत ॥ १९ ॥
तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ॥ २० ॥ दितेश्च वै
सोऽदितेश्चेडायाश्चेन्द्राण्याश्च प्रियं धाम भवति य एवं वेद ॥ २१ ॥
स दिशोऽनु व्यचलत् तं विराडनु व्यचलत् सर्वे च देवाः सर्वाश्च
देवताः ॥ २२ ॥ विराजश्च वै स सर्वेषां च देवानां सर्वासां च
देवतानां प्रियं धाम भवति य एवं वेद ॥ २३ ॥ स सर्वानन्तर्देशा-
ननु व्यचलत् ॥ २४ ॥ तं प्रजापतिश्च परमेष्ठी च पिता च
पितामहश्चानुव्यचलन् ॥ २५ ॥ प्रजापतेश्च वै स परमेष्ठिनश्च
पितुश्च पितामहस्य च प्रियं धाम भवति य एवं वेद ॥ २६ ॥

१५,७

स महिमा सद्रूर्भूत्वान्तं पृथिव्या अगच्छत् स समुद्रोभवत् ॥ १ ॥
तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा
च वर्षं भूत्वानुव्यवर्तयन्त ॥ २ ॥ ऐनमापो गच्छन्त्यैनं श्रद्धा

गच्छत्यैनं वर्षं गच्छति य एवं वेद ॥ ३ ॥ तं श्रद्धा च यज्ञश्च लोकश्चान्नं चान्नाद्यं च भूत्वाभिपर्यावर्तन्त ॥ ४ ॥ ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं लोको गच्छत्यैनमन्नं गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ॥ ५ ॥

[२]

## तैत्तिरीयसंहिता[a]

### अग्नि-महिमा १,५,९,२-५

अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन् ते देवा हीना अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳस्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत् ते देवाः पशून् वित्त्वा कामाꣳअकुर्वत य एवं विद्वानग्निमुप तिष्ठते पशुमान् भवत्यादित्यो वा अस्माल्लोकादमुं लोकमैत् सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायत् स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳस्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत् स एनꣳस्तुतः सुवर्गं लोकमगमयद् य एवं विद्वानग्निमुप तिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेति।

### इष्टिविशेष-महिमा २,४,१,१-४

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाꣳसि रात्रीभिरसुभ्नन् तान्त्सुब्धान् मृतानभि व्यौच्छत् ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन् वरं

---

[a]) कृष्णयजुर्वेदीया ।

वृणामहै यदसुरान् जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुरान् जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳस्यासन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् पराऽसुरा यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् तं तेनाप नुदते प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतयेष्ट्या यजते ॥

६,२,४,१-५

सुवर्गं वा एते लोकं यन्ति य उपसद उपयन्ति तेषां य उन्नयते हीयत एव स नोदनेषीति सून्नीयमिव यो वै स्वार्थेतां यताꣳश्रान्तो हीयत उत स निष्ट्यार्य सह वसति तस्मात् सकृदुन्नीय नापरमुन्नयेत दघ्नोन्नयेतैतद्वै पशूनाꣳरूपꣳरूपेणैव पशूनवरुन्धे यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत् तं देवा हस्तान्त्सꣳर-भ्यैच्छन् तमिन्द्र उपर्युपर्यत्यक्रामत् सोऽब्रवीत् को माऽयमुपर्युपर्यत्य-क्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्तेति सोऽब्रवीद् दुर्गे वै हन्ताऽवोचथा वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन् भित्वा तमहन्त्सोऽब्रवीद् दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति

तेभ्यो यज्ञ एव यज्ञमाऽहरद्यत् तद्वित्तं वेद्यमसुराणामविन्दन्त तदेकं वेद्यै वेदित्वमसुराणां वा इयमग्र आसीद्यावदासीनः परापश्यति तावद्देवानां ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदियꣳसलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रः सलावृकी रूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत् तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वम्। सा वा इयꣳसर्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते त्रिꣳशत् पदानि पश्चात् तिरश्ची भवति षट्त्रिꣳशत् प्राची चतुर्विꣳशतिः पुरस्तात् तिरश्ची दशदश संपद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्ध उद्धन्ति यदेवास्या अमेध्यं तदप हन्त्युद्धन्ति तस्मादोषधयः परा भवन्ति। बर्हिः स्तृणाति तस्मादोषधयः पुनराभवन्त्युत्तरं बर्हिष उत्तरबर्हिः स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः।

[ २ ]

## मैत्रायणी संहिता[a]

### देवासुरसङ्ग्रामः ४,३,४

देवाश्च वा असुराश्चास्पर्धन्त, स वृत्र इन्द्रमब्रवीत्, त्वं देवानाꣳश्रेष्ठो, ऽस्यहमसुराणाꣳसꣳशक्नवाव, मा ना अऽन्योऽन्यꣳवधीदिति, तौ वै समामेतामनभिद्रोहाय, ते देवा वृत्रममन्यन्ता, ऽयꣳवावेदं भविष्यतीति तं इन्द्र ऐच्छन्, हनामेममिति, सोऽब्रवीत्, संधा वै मे सꣳहितानभिद्रोहायेति, तमग्निरब्रवीदहमेव त्वेतः पास्यामीति पृथिव्या, अहमन्तरिक्षादिति वरुणो, ऽहं दिव इति रुद्रस्ततो वै देवा वृत्रमघ्नन् वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिञ्चते, तद्वार्त्रघ्नमेवैतद्, देवाश्च वा असुराश्च समयतन्त, तानग्निस्त्रेधात्मानं कृत्वा प्रत्यय-

a) कृष्णयजुर्वेदीया।

ततोऽग्निरेवास्मिँल्लोके भूत्वा, वरुणोऽन्तरिक्षे रुद्रो दिवि, स इन्द्रोऽमन्यताऽयꣳ वावेदं भविष्यतीति, सोऽब्रवीदहꣳ विश्वाभ्या आशाभ्या इति, ततो वा अजयꣳस्तज्जित्या एवैतदेतेनैव याजयेत् संग्रामे, जयति संग्राममेतेनैव याजयेद् भ्रातृव्यवन्तꣳ यो वास्य प्रियः स्यात् तं, भवत्यात्मना, परास्य भ्रातृव्यो भवति, यद्वै तदिन्द्रस्तुरीय उपसमपद्यत तस्मादिन्द्रतुरीयं, धेनुरनड्वाही दक्षिणा, यद्वहिनी तेनाग्नेयी, यद्धेनुः सती दान्ता तेन वारुणी, यद्गौस्तेन रौद्री, यत् पयस्तेनैन्द्री, रूपैरेवैनाꣳ समर्धयतीन्द्रो वै नमुचिं नालभत, स रश्मीन् कुलायं कृत्वान्वारोहदमुमादित्यं, तꣳ वा अन्वमन्त्रयत सखाया असावेति, सोऽब्रवीन्नाहꣳ हनिष्यामीति, सोऽब्रवीत् संधां ते संदधे यथा त्वा न दिवा हनानि न नक्तं न शुष्केण नार्द्रेणेति, तस्य वा उपोदये सूर्यस्य नीहारꣳ संतत्यापां फेनेन शिरोऽछिनत्, तद्वा एनमन्ववर्तत, मित्रद्रुगसीति, पाप्मा वै नमुचेः शिरः, पाप्मा वा एनं तदन्ववर्तत, पाप्मानꣳ वै स तेनापाहत, तत् पाप्मानमेवैतेनापहतेऽपां न्ययनादपामार्गानाहरन्त्यापो वै रक्षोघ्नीरपो रक्षाꣳसि न तरन्ति रक्षसामपहत्यै, वरो दक्षिणावरेणैव वरꣳ स्पृणोत्यात्मा हि वर आत्मानꣳ हि तस्य तदन्ववर्तत, ये देवाः पुरःसदो अग्निनेत्रा रक्षोहणस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहेत्येतद्देव३त्या वा इमा दिशो, यथादेवतꣳ वा एतदाभ्यो दिग्भ्योऽधि रक्षाꣳस्यपहन्त्यनुपरिक्रामं जुहोति, सर्वाभ्यः एव दिग्भ्योऽधि रक्षाꣳस्यपहन्तीदमहꣳ रक्षोभिः समूहाम्यग्ने संदह रक्षः, संदग्धꣳ रक्षा इत्याह रक्षसां ध्वरायै रक्षसामन्तरित्या अथ यत् पुनः समूह्य जुहोति याम्य एव दिग्भ्योऽधि रक्षाꣳस्यपावधीत्ता भागिनीः करोत्यहिꣳसायै, रथः पञ्चवाही दक्षिणा पञ्च दिशः पञ्च देवताः समृद्ध्यै ।

यज्ञे लोकानुकृतिः ४,५,७

ब्रह्मवादिनो वदन्ति, किं तद्यज्ञे क्रियते यस्माद्धस्तादाना अन्ये पशवो मुखादाना अन्य इति, यदुपा ँशुर्हस्तेन गृह्यते तस्मान्मर्कटः पुरुषो हस्ती ते हस्तादाना मुखं वै वाय३व्य ँयद्वाय३व्ये नेतरे ग्रहा गृह्यन्ते तस्मादितरे पशवो मुखादाना ब्रह्मवादिनो वदन्ति, किं तद्यज्ञे क्रियते यस्मात् सद्यो जाताः पशवः प्रतितिष्ठन्ति स ँवत्सरे पुरुषा इत्युपा ँश्वन्तर्यामौ वा अन्वन्ये पशवः, पुरुषस्त्वै यज्ञेन संमितः, प्राणापानौ वा उपा ँश्वन्तर्यामौ, यदेतौ ग्रहा असन्नौ हूयेते तस्मात् सद्यो जाताः पशवः प्रतितिष्ठन्ति, स ँवत्सरो वा अग्निष्टोमो द्वादश मासाः स ँवत्सरो यदेत इतरे ग्रहाः साद्यन्ते तस्मात् पुरुषो जातः स ँवत्सरे प्रतितिष्ठति।

[ ४ ]

## काठकसंहिता[a]

भाव-वृत्तम् ७,१०

अहर्वावासीन्न रात्री सा यमी भ्रातरं मृतं नामृष्यत तां यदपृच्छन् यमि कर्हि ते भ्रातामृतेत्यद्येत्येवाब्रवीत् ते देवा अब्रुवन्नन्त-र्दधामेदं रात्रीं करवामेति ते रात्रीमकुर्वंस्ते रात्र्यां भूतायां पशून्नापश्यन् सावेन्न वै पश्यन्तीति सा न व्यौच्छदरेक्लस्यत् पशुषु तान् देवा इच्छन्तः पल्यायन्त तांश्छन्दोभिरन्वपश्यंस्तस्माच्छन्दोभि-र्नक्तमग्निरुपस्थेयः पशूनामनुख्यात्यै नास्मात् पशवस्तिरो भवन्ति य एवं वेद, सावेदनु वा अख्यन्निति सा व्यौच्छत् ते देवा अब्रुवन्नमा वै नो वस्वभूदिति सामावस्यामा ह वा अस्य वसु भवति विन्दतेऽन्यस्य

---

a) कृष्णयजुर्वेदीया।

वसु नास्यान्यो वसु विन्दते य एवं विद्वानग्निमुपतिष्ठते ।। देवा वा अह्नो रक्षांसि निरघ्नंस्तानि रात्रीं प्राविशंस्तां देवा न व्येतुमधृष्णुवंस्त इन्द्रमब्रुवंस्त्वं वै न ओजिष्ठोऽसि त्वमिमां वीहीति स्तुत मेत्यब्रवीन्नास्तुतो वीर्यं कर्तुमर्हामीति तेऽब्रुवन्नेष तेऽग्निर्नेदिष्ठं स त्वा स्तौत्विति तमग्निरस्तौत् स स्तुतस्सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षांस्यतरदिन्द्रो यजमानो यदग्निमुपतिष्ठते सर्वा एव मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षांसि तरति नास्य नक्तं रक्षांसीशते य एवं वेद, त्वष्टा वै भूत्वा प्रजापतिः प्रजा असृजत त्वष्टा यजमानस्स यद्वाचावदत् तदभवद् यद्वै वाचा वदति तद् भवति यद्यदेव वाचा वदति तत्तद् भवति तत्तत् सृजते ।

## आहुतिविशेष-महिमा ८,९

अग्निर्वा इमं लोकं नोपाकामयत यदस्मिन्नामं मांसं पचन्ति यत् पुरुषं दहन्ति यत् स्तेयं पचन्ति तदभीमं लोकं नोपाकामयत स यदिमं लोकमुपावर्तत या अस्य यज्ञियास्तन्व आसंस्ताभिरुदक्रामत् ता एताः पवमाना पावका शुचिस्तस्य या पवमाना तनूरासीत् पशूंस्तया प्राविशद् या पावकापस्तया या शुचिरमुमादित्यं तया, प्राणो वै पवमानः प्राणेन पशवो यता यदग्नये पवमानाय पशूनेवास्मै तेन यच्छत्येषा वा अस्य सा तनूर्यया पशून् प्राविशद्यदिदं घृते हुते प्रतीवार्चिरुज्ज्वलत्येषा वा अस्य सा तनूर्ययापः प्राविशद्यदिदमप्सु परीव ददृशे यद्धस्ता अवनिज्य स्नात्वा श्रदिव धत्ते य एवाप्स्वग्निस्स एवैनं तत् पावयति स स्वदयति यदग्नये पावकाय सपशुमेवैनं पावयत्येषा वा अस्य सा तनूर्ययापः प्राविशद्यदिदं घृते हुते शोणामिवार्चिरुज्ज्वलत्येषा वा अस्य सा तनूर्ययामुमादित्यं प्राविशद्यदिदमुपरिष्टाद्दीव भाति यज्ज्योतिरिव यदग्नये शुचय आविर्भूत्या एव घोषायैव श्लोकायैव रुच एवैषा वा अस्य सा तनूर्ययामुमादित्यं प्राविशद्यदिदं

घृते हुते सुवर्णमिवार्चिरुज्ज्वलति यदेतानि हवींषि निरुप्यन्ते ता एवास्यैतत् तन्वस्संभरति सतनूरेवैतत् सतेजा आधीयत इमे वै लोका एतानि हवींषि नानाबर्हींषि भवन्ति नाना हीमे लोकाः प्रतिष्ठिताः ॥

[ ५ ]

## कपिष्ठलकठ-संहिता[a]

### अग्न्याधान-विकल्पाः ६,६

दिशो वै नाकल्पन्त न प्राज्ञायन्त। तत एतामग्नये प्राचीं दिशमरोचयन्यत्कृत्तिकाः। यत्कृत्तिकास्वग्निमाधत्ते प्राच्यामेवैनं दिश्याधत्ते। एष वावैकः प्राङ्वस्यति य आहिताग्निः। प्रत्यञ्चोऽन्ये। आग्नेयमेतन्नक्षत्रं यत्कृत्तिकाः। यत्कृत्तिकास्वग्निमाधत्ते स्व एवैनं नक्षत्र आधत्ते। प्रजापतेर्वा एतच्छिरो यत्कृत्तिकाः। यत्कृत्तिकास्वग्निमाधत्ते शीर्षण्यो मुख्यो भवति। सप्त वै कृत्तिकाः। सप्त शीर्षण्याः प्राणाः। प्राणा इन्द्रियाणि। प्राणानेवेन्द्रियाण्याप्नोति। [ रोहिण्यामाधेयः ] रोहिण्यां वा एतं देवा आदधत। तया रोहमरोहयन्। तद्रोहिण्या रोहिणीत्वम्। रोहिण्यां वा एतं प्रजापतिराधत्त। तया रोहमरोहयत्। तद्रोहिण्या रोहिणीत्वम्। एष वै मनुष्यस्य स्वर्गो लोको यदस्मिंल्लोके वसीयान्भवति। ऋद्धया एव रोहिण्यामाधेयः ॥

कालकाञ्जा वै नामासुरा आसन्। त इष्टका अचिन्वत। तदिन्द्र इष्टकामप्युपाधत्त। तेषां मिथुनौ दिवमाक्रमेताम्। ततस्तामावृहत्। तेऽवाकीर्यन्त। तावेतौ दिव्यौ श्वानौ। यो व्यवृह्यत स एष ऊर्णवाभिः स्वैरान्त्रैः संततिंसति। ओजो वावैषां तद्वीर्यमाधत्त। ओज एव वीर्यं भ्रातृव्यस्याधत्ते यच्चित्रायामग्निमाधत्ते। तदेतदैन्द्रं नक्षत्रमभिभूतिमत्। पूर्वासु फल्गुणीष्वादधीत यः कामयेत भगी स्यामिति। भगस्य वा एतन्नक्षत्रम्। भगी भवति। उत्तरास्वादधीत यः कामयेत दानकामा मे प्रजाः स्युरिति। अर्यम्णो वा एतन्नक्षत्रम्।

---

[a]) कृष्णयजुर्वेदीया।

एषोऽर्यमा यो ददाति । दानमिमाः प्रजा उपजीवन्ति । दानकामा अस्मै भवन्ति । राजन्यस्यादध्यात् । राजन्यो हि दानमुपजीवति । वसन्ते ब्राह्मणेनाधेयः । वसन्तो वै ब्राह्मणस्यर्तुः । स्व एवैनमृतावाधत्ते । तेजो ब्रह्मवर्चसमुपाधत्ते । ग्रीष्मे राजन्येनाधेयः । ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधत्ते । ओजो वीर्यमुपाधत्ते । शरदि वैश्येनाधेयः । शरद्वै वैश्यस्यर्तुः । स्व एवैनमृतावाधत्ते । ऊर्जं पशूनुपाधत्ते । सोमेन यजा इति वा अग्निमाधत्ते । यस्मिन्नेव कस्मिंश्चर्तावादधीत सोमेन यक्ष्यमाणः । एतद्ध्यवर्धयद्यः सोमेन यजते । फल्गुनीपूर्णमास आधेयः । एतद्वा ऋतूनां मुखम् । ऋतुमुख एवैनमाधत्ते । [शिशिर आधेयः । शिशिरं वा अग्नेर्जन्म । प्रजातमेवैनमाधत्ते ।] सर्वासु दिक्ष्वृध्नवानीति वा अग्निमाधत्ते । सर्वासु दिक्ष्वग्निः शिशिरे । सर्वास्वेव दिक्ष्वृध्नोति यः शिशिरेऽग्निमाधत्ते । पूर्णमासे वामावस्यायां वादधीत । एतद्वै पुण्याहम् । पुण्याह एवैनमाधत्ते । तस्मादिष्ट्या वाग्रायणेन वा पशुना वा सोमेन वा पूर्णमासे वामावस्यायां वा यजेत । एष वै यज्ञः । यज्ञमेव प्रति यज्ञमालभते ॥

---

# ब्राह्मणानि

## [ १ ]

## ऐतरेयब्राह्मणम्[a]

### सोम-महिमा १

अन्यतरोऽनड्वान्युक्तः स्यादन्यतरो विमुक्तोऽथ राजानमुपावहरेयुः। यदुभयोर्विमुक्तयोरुपावहरेयुः पितृदेवत्यं राजानं कुर्युः। यद्युक्तयोरयोगक्षेमः प्रजा विन्देत्ताः प्रजाः परिप्लवेरन्। योऽनड्वान्विमुक्तस्तच्छालासदां प्रजानां रूपं यो युक्तस्तच्चक्रियाणां ते ये युक्तेऽन्ये विमुक्तेऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति।

देवासुरा वा एषु लोकेषु समयतन्त त एतस्यां प्राच्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्त उदीच्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त ते ततो न पराजयन्त सैषा दिगपराजिता तस्मादेतस्यां दिशि यतेत वा यातयेद्वेश्वरो हानृणाकर्तोः। ते देवा अब्रुवन्नराजतया वै नो जयन्ति राजानं करवामहा इति, तथेति, ते सोमं राजानमकुर्वंस्ते सोमेन राज्ञा सर्वा दिशोऽजयन्नेष वै सोमराजा यो यजते प्राचि तिष्ठत्यादधति तेन प्राचीं दिशं जयति तं दक्षिणा परिवहन्ति तेन दक्षिणां दिशं जयति तं प्रत्यञ्चमावर्तयन्ति तेन प्रतीचीं दिशं जयति तमुदीचस्तिष्ठत उपावहरन्ति तेनोदीचीं दिशं जयति सोमेन राज्ञा सर्वा दिशो जयति य एवं वेद ॥१४॥

हविरातिथ्यं निरुप्यते सोमे राजन्यागते। सोमो वै राजा यजमानस्य गृहानागच्छति तस्मा एतद्धविरातिथ्यं निरुप्यते तदातिथ्यस्याऽऽतिथ्यत्वम्।

---

a) ऋग्वेदीयम्।

नवकपालो भवति नव वै प्राणाः प्राणानां क्लृप्त्यै प्राणानां प्रतिप्रज्ञात्यै। वैष्णवो भवति विष्णुर्वै यज्ञः स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति।

सर्वाणि वाव च्छन्दांसि च पृष्ठानि च सोमं राजानं क्रीतमन्वायन्ति यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियते। अग्निं मन्थन्ति सोमे राजन्यागते तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्क्षदन्ते यदग्निं मन्थन्त्यग्निर्हि देवानां पशुः ॥१५॥

### महाव्याहृति-महिमा ५,३२

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवं ताँल्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात्। तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदोमिति तस्मादोमिति प्रणौत्योमिति वै स्वर्गो लोक ओमित्यसौ योऽसौ तपति। स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजत स ऋचैव हौत्रमकरोद्यजुषाऽऽध्वर्यवं साम्नोद्गीथं यदेतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत्, स प्रजापतिर्यज्ञं देवेभ्यः संप्रायच्छत्ते देवा यज्ञमतन्वत तमाहरन्त तेनायजन्त त ऋचैव हौत्रमकुर्वन्यजुषाऽऽध्वर्यवं साम्नोद्गीथं यदेवैतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकुर्वन्।

ते देवा अब्रुवन्प्रजापतिं यदि नो यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा का प्रायश्चित्तिरिति स प्रजापति-

रब्रवीद्देवान्यदि वो यज्ञ ऋक्त आर्तिर्भवति भूरिति गार्हपत्ये जुहवाथ यदि यजुष्टो भुव इत्याग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरित्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहवाथेति ।

एतानि ह वै वेदानामन्तःश्लेषणानि यदेता व्याहृतयस्तद्यथाऽऽत्मनाऽऽत्मानं संदध्याद्यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेदेवमेवैताभिर्यज्ञस्य विश्लिष्टं संदधाति सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या ।

### मन्त्रयोगविशेष-महिमा ६,१

देवा ह वै सर्वचरौ सत्रं निषेदुस्ते ह पाप्मानं नापजघ्निरे तान्होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृदेका वै वो होत्राऽकृता तां वोऽहं करवाण्यथ पाप्मानमपहनिष्यध्व इति ते ह तथेत्यूचुस्तेषां ह स्म स मध्यंदिने मध्यंदिन एवोपोदासर्पद्ग्राव्णोऽभिष्टौति । तस्मान्मध्यंदिने मध्यंदिन एव ग्राव्णोऽभिष्टुवन्ति तदनुकृति । स ह स्म येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति । तान्ह राजा मदयांचकार ते होचुराशीविषो वै नो राजानमवेक्षते हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति तथेति तस्य होष्णीषेणाक्ष्यावपिनह्युस्तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति तदनुकृति ।

तान्ह राजा मदयामेव चकार ते होचुः स्वेन वै नो मन्त्रेण ग्राव्णोऽभिष्टौति हन्तास्यान्याभिर्ऋग्भिर्मन्त्रमापृणचामेति तथेति तस्य हान्याभिर्ऋग्भिर्मन्त्रमापपृचुस्ततो हैनान्न मदयांचकार तद्यदस्यान्याभिर्ऋग्भिर्मन्त्रमापृञ्चन्ति शान्त्या एव । ते ह पाप्मानमपजघ्निरे तेषामन्वपहतिं सर्पाः पाप्मानमपजघ्निरे त एतेऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्ति । अप पाप्मानं हते य एवं वेद ।

## दैवतराजाभिषेक-महिमा ८,१४

अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते सम्राडित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां स्वाराज्यायैव तेऽभिषिच्यन्ते स्वराळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमुदीच्यां दिशि विश्वेदेवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय तस्मादेतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरभद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते विराडित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमूर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय माहाराज्यायाऽऽधि-

पत्याय स्वावश्यायाऽऽतिष्ठायेति स परमेष्ठी प्राजापत्योऽभवत् । स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत्सर्वांल्लोकानविन्दत्सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतामगच्छत्साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिंल्लोके स्वयंभूः स्वराडमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत् समभवत् ।

[ २ ]

## कौषीतकिब्राह्मणम्[a]

### सूक्तविशेष-महिमा १२,३

माध्यमाः सरस्वत्यां सत्रमासत तद्धापि कवषो मध्ये निषसाद तं हेम उपोदुर्दास्या वै त्वं पुत्रोऽसि न वयं त्वया सह भक्षयिष्याम इति स ह क्रुद्धः प्रद्रवन्त्सरस्वतीमेतेन सूक्तेन तुष्टाव तं हेयमन्वेयाय तत उ हेमे निरागा इव मेनिरे तं हान्वावृत्योचुर्ऋषे नमस्तेऽस्तु मा नो हिंसीस्त्वं वै नः श्रेष्ठोऽसि यं त्वेयमन्वेतीति तं ह ज्ञपयांचक्रुस्तस्य ह क्रोधं विनिन्युः स एष कवषस्यैष महिमा सूक्तस्य चानुवेदिताऽथ यत्सह पत्नीभिर्यन्ति गन्धर्वा ह वा इन्द्रस्य सोममप्सु प्रत्यायिता गोपायन्ति त उ ह स्त्रीकामास्ते हाऽऽसु मनांसि कुर्वते तद्यथा प्रमत्तानां यज्ञमाहरेदेवं तदुपनामुक उ एवैनं यज्ञो भवति य एवं वेद विंशतिमन्वाह ता विराजमभिसंपद्यन्ते वैराजीर्वा आपोऽन्नं विराडन्नमापोऽन्नेन तदन्नाद्यं समर्धयति त्रिः प्रथमया त्रिरुत्तमया चतुर्विंशतिः सम्पद्यन्ते चतुर्विंशत्यक्षरा गायत्री गायत्री प्रातःसवनं वहति तदु ह प्रातःसवनरूपा न्वाप इतीति न्वा अपोनप्त्रियस्य ।

### मानवशरीरे यज्ञोपचारः १७,७

पुरुषो वै यज्ञस्तस्य शिर एव हविर्धाने मुखमाहवनीय उदरं सदोऽन्नमुक्थानि बाहू मार्जालीयश्चाग्नीध्रीयश्च या इमा अन्तर्देवतास्-

---

a) ऋग्वेदीयम् ।

तेऽन्तःसदसं धिष्ण्याः प्रतिष्ठा गार्हपत्यव्रतश्रपणावित्यथापरं तस्य मन एव ब्रह्मा प्राण उद्गाताऽपानः प्रस्तोता व्यानः प्रतिहर्ता वाग्घोता चक्षुरध्वर्युः प्रजातिः सदस्य आत्मा यजमानोऽङ्गानि होत्राशंसिनस्तद्यदध्वर्युः स्तोत्रमुपाकरोति चक्षुरेव तत्प्राणैः संदधात्यथो अपानमेव तन्मनसा संतनोत्यथ यत्प्रस्तोता ब्रह्माणमामन्त्रयते ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति मनो वा अग्रणीर्भवत्येषां प्राणानां मनसा प्रसूताः स्तोमेन स्तुयामेत्यथो अपानमेव तन्मनसा संतनोत्यथ यद् ब्रह्मा स्तोत्रमनुमन्यते मन एव तत्प्राणैः संदधात्यथो अपानमेव तन्मनसा संतनोत्यथ यत्प्रस्तोता प्रस्तौत्यपानमेव तत्प्राणे दधात्यथ यदुद्गातोद्गाति प्राणमेव तद्व्याने दधात्यथ यत्प्रतिहर्ता प्रतिहरति व्यानमेव तत्प्राणे दधात्येवमेवैताः सर्वाः देवताः प्राण एव प्रतिष्ठिता अथ यद्धोता साम्ना शस्त्रमुपसंतनोति वाग्वै होता वाचमेव तत्प्राणैः संदधात्यथो अपानमेव तन्मनसा संतनोत्यथ यद्धोत्राशंसिनः सामसंततिं कुर्वन्त्यङ्गान्येव तत्प्राणैः संदधत्यथ यद्यजमानः स्तोत्रमुपगाति प्राणा वा उद्गातारः प्राणानेव तदात्मन्धत्ते तस्मान्नैनं बहिर्वेद्यभ्यस्तमियान्नाभ्युदियान्नाभ्युपाकुर्यान्नाभ्याश्रावयेन्नाभिवषट्कुर्यान्नाधिष्ण्ये प्रतपेत नेत्प्राणेभ्य आत्मानमपादधानीति।

[ ३ ]

## तैत्तिरीयब्राह्मणम्[a]

### अग्न्याधान-महिमा १,१,९

शमीगर्भादग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति । अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् । सा द्वितीयमपचत् ॥१॥ तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा रेतोऽधत्त । तस्यै मित्रश्च वरुणश्चाजायेताम् । सा तृतीयमपचत् । तस्या उच्छेषणमददुः । तत्प्राश्नात् । सा

[a]) कृष्णयजुर्वेदीयम् ।

रेतोऽधत्त। तस्या अꣳशश्च भगश्चाजायेताम्। सा चतुर्थमपचत्॥२॥ तस्या उच्छेषणमददुः। तत्प्राश्नात्। सा रेतोऽधत्त। तस्या इन्द्रश्च विवस्वाꣳश्चाजायेताम्। ब्रह्मौदनं पचति। रेत एव तद्दधाति। प्राश्नन्ति ब्राह्मणा ओदनम्। यदाज्यमुच्छिष्यते। तेन समिधोऽभ्यज्याऽऽदधाति। उच्छेषणाद्वा अदिती रेतोऽधत्त॥३॥ उच्छेषणादेव तद्रेतो धत्ते। अस्थि वा एतत्। यत्समिधः। एतद्रेतः। यदाज्यम्। यदाज्येन समिधोऽभ्यज्याऽऽदधाति। अस्थ्येव तद्रेतसि दधाति। तिस्र आदधाति मिथुनत्वाय। इयतीर्भवन्ति। प्रजापतिना यज्ञमुखेन संमिताः॥४॥ इयतीर्भवन्ति। यज्ञपरुषा संमिताः। इयतीर्भवन्ति। एतावद्वै पुरुषे वीर्यम्। वीर्यसंमिताः। आर्द्रा भवन्ति। आर्द्रमिव हि रेतः सिच्यते। चित्रियस्याश्वत्थस्याऽऽदधाति। चित्रमेव भवति। घृतवतीभिरादधाति॥५॥ एतद्वा अग्नेः प्रियं धाम। यद् घृतम्। प्रियेणैवैनं धाम्ना समर्धयति। अथो तेजसा। गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात्। गायत्रच्छन्दा वै ब्राह्मणः। स्वस्य च्छन्दसः प्रत्ययनस्त्वाय। त्रिष्टुब्भी राजन्यस्य। त्रिष्टुप्छन्दा वै राजन्यः। स्वस्य छन्दसः प्रत्ययनस्त्वाय॥६॥ जगतीभिर्वैश्यस्य। जगतीछन्दा वै वैश्यः। स्वस्य च्छन्दसः प्रत्ययनस्त्वाय। तꣳसंवत्सरं गोपायेत्। संवत्सरꣳहि रेतो हितं वर्धते। यद्यैनꣳसंवत्सरे नोपनमेत्। समिधः पुनरादध्यात्। रेत एव तद्धितं वर्धमानमेति। न माꣳसमश्नीयात्। न स्त्रियमुपेयात्॥७॥ यन्माꣳसमश्नीयात्। यत्स्त्रियमुपेयात्। निर्वीर्यः स्यात्। नैनमग्निरुपनमेत्। श्व आधास्यमानो ब्रह्मौदनं पचति। आदित्या वा इत उत्तमाः सुवर्गं लोकमायन्। ते वा इतो यन्तं प्रतिनुदन्ते। एते खलु वावाऽऽदित्याः। यद्ब्राह्मणाः। तैरेव सन्त्वं गच्छति॥८॥ नैनं प्रतिनुदन्ते। ब्रह्मवादिनो वदन्ति। क्व सः। अग्निः कार्यः। योऽस्मै प्रजां पशून्प्रजनयतीति। शल्कैस्ताꣳरात्रिमग्निमिन्धीत। तस्मिन्नुपव्युषमरणी निष्टपेत्। यथर्षभाय वाशिता[a] न्यांविच्छायति ताद्दगेव तत्।

[a]) तु. भ.; वैद्व. सा. °तानि आवि° इति पदच्छेदः।

अपोद्द्य भस्माग्निं मन्थति ॥९॥ सैव साग्नेः संततिः । तं मन्थित्वा प्राञ्चमुद्धरति । संवत्सरमेव तद्रेतो हितं प्रजनयति । अनाहितस्तस्याग्निरित्याहुः । यः समिधोऽनाधायाग्निमाधत्त इति । ताः संवत्सरे पुरस्तादादध्यात् । संवत्सरादेवैनमवरुध्याऽऽधत्ते । यदि संवत्सरे नाऽऽदध्यात् । द्वादश्यां पुरस्तादादध्यात् । संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरमेवास्याऽऽहिता भवन्ति । यदि द्वादश्यां नाऽऽदध्यात् । त्र्यहे पुरस्तादादध्यात् । आहिता एवास्य भवन्ति ॥१०॥

### सृष्टिवर्णनम् २,२,९

इदं वा अग्रे नैव किंचनाऽऽसीत् । न द्यौरासीत् । न पृथिवी । नान्तरिक्षम् । तदसदेव सन्मनोऽकुरुत स्यामिति । तदतप्यत । तस्मात्तेपानाद्धूमोऽजायत । तद् भूयोऽतप्यत । तस्मात्तेपानादग्निरजायत । तद् भूयोऽतप्यत ॥१॥ तस्मात्तेपानाज्ज्योतिरजायत । तद् भूयोऽतप्यत । तस्मात्तेपानादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तेपानान्मरीचयोऽजायन्त । तद्भूयोऽतप्यत । तस्मात्तेपानादुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव समहन्यत । तद्वस्तिमभिनत् ॥२॥ स समुद्रोऽभवत् । तस्मात्समुद्रस्य न पिबन्ति । प्रजननमिव हि मन्यन्ते । तस्मात्पशोर्जायमानादापः पुरस्ताद्यन्ति । तद्दशहोतान्वसृज्यत । प्रजापतिर्वै दशहोता । य एवं तपसो वीर्यं विद्वांस्तप्यते । भवत्येव । तद्वा इदमापः सलिलमासीत् । सोऽरोदीत्प्रजापतिः ॥३॥ स कस्मा अज्ञि । यद्यस्या अप्रतिष्ठाया इति । यदप्स्ववापद्यत । सा पृथिव्यभवत् । यद् व्यमृष्ट । तदन्तरिक्षमभवत् । यदूर्ध्वमुदमृष्ट । सा द्यौरभवत् । यदरोदीत् । तदनयो रोदस्त्वम् ॥४॥ य एवं वेद । नास्य गृहे रुदन्ति । एतद्वा एषां लोकानां जन्म । य एवमेषां लोकानां जन्म वेद । नैषु लोकेष्वार्तिमार्च्छति । स इमां प्रतिष्ठामविन्दत । स इमां प्रतिष्ठां वित्त्वाऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स जघनादसुरानसृजत ॥५॥ तेभ्यो मृन्मये पात्रेऽन्नमदुहत् । याऽस्य सा तनूरासीत् । तामपाहत ।

सा तमिस्राऽभवत् । सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स प्रजननादेव प्रजा असृजत । तस्मादिमा भूयिष्ठाः । प्रजननाद्ध्येना असृजत ॥६॥ ताभ्यो दारुमये पात्रे पयोऽदुहत् । याऽस्य सा तनूरासीत् । तामपाहत । सा ज्योत्स्नाऽभवत् । सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स उपपक्षाभ्यामेवर्तूनसृजत । तेभ्यो रजते पात्रे घृतमदुहत् । याऽस्य सा तनूरासीत् ॥७॥ तामपाहत । सोऽहोरात्रयोः संधिरभवत् । सोऽकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स मुखाद्देवानसृजत । तेभ्यो हरिते पात्रे सोममदुहत् । याऽस्य सा तनूरासीत् । तामपाहत । तदहरभवत् ॥८॥ एते वै प्रजापतेर्दोहाः । य एवं वेद । दुह एव प्रजाः । दिवा वै नोऽभूदिति । तद्देवानां देवत्वम् । य एवं देवानां देवत्वं वेद । देववानेव भवति । एतद्वा अहोरात्राणां जन्म । य एवमहोरात्राणां जन्म वेद । नाहोरात्रेष्वार्तिमाच्छति ॥९॥ असतोऽधि मनोऽसृज्यत । मनः प्रजापतिमसृजत । प्रजापतिः प्रजा असृजत । तद्वा इदं मनस्येव परमं प्रतिष्ठितम् । यदिदं किं च । तदेतच्छ्वोवस्यसं नाम ब्रह्म । व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति । प्रजायते प्रजया पशुभिः । प्र परमेष्ठिनो मात्रामाप्नोति । य एवं वेद ॥१०॥

[ ४ ]

## शतपथब्राह्मणम्[a]

### वामन-विस्तारः १,२,५

देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवा ऽअनुव्यामिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति ॥१॥ ते होचुः हन्तेमां पृथिवीं विभजामहै तां विभज्योपजीवामेति । तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो विभजमानाऽअभीयुः ॥२॥ तद्वै देवाः शुश्रुवुः । विभजन्ते ह वाऽइमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा विभजन्ते

a) शुक्लयजुर्वेदीयम् ।

के ततः स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥३॥ ते होचुः । अनु नोऽस्यां पृथिव्यामा भजतास्त्वेव नोऽप्यस्यां भागऽइति ते हासुराऽअसूयन्तऽइवोचुर्य्यावदेवैष विष्णुरभिशेते तावद्वो दद्म ऽइति ॥४॥ वामनो ह विष्णुरास । तद्देवा न जिहीडिरे महद्वै नोऽदुर्य्ये नो यज्ञसम्मितमदुरिति ॥५॥ ते प्राञ्चं विष्णुं निपाद्य । छन्दोभिरभितः पर्य्यगृह्णन् 'गायत्रेण त्वा च्छन्दसा परिगृह्णामी'ति दक्षिणत 'स्त्रैष्टुभेन त्वा च्छन्दसा परिगृह्णामी'ति पश्चा'ज्जागतेन त्वा च्छन्दसा परिगृह्णामी' त्युत्तरतः ॥६॥ तं छन्दोभिरभितः परिगृह्य । अग्निं पुरस्तात् समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमाꣳ सर्वां पृथिवीꣳ समविन्दन्त तद्यदेनेनेमाꣳसर्वाꣳसमविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्य्यावती वेदिस्तावती पृथिवीत्येतया हीमाꣳसर्वाꣳ समविन्दन्तैवꣳ ह वाऽइमाꣳसर्वाꣳसपत्नानाꣳ संवृङ्क्ते निर्भजत्यस्यै सपत्नान् यऽएवमेतद्वेद ॥७॥

## ऋणत्रयापाऽकृतिः १,७,२

ऋणꣳ ह वै जायते योऽस्ति । स जायमानऽएव देवेभ्यऽऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥१॥ स यदेव यजेत । तेन देवेभ्यऽऋणं जायते । तद्ध्येभ्यऽएतत् करोति यदेनान् यजते यदेभ्यो जुहोति ॥२॥ अथ यदेवाऽनुब्रुवीत । तेनर्षिभ्यऽऋणं जायते तद्ध्येभ्य ऽएतत् करोत्यृषीणां निधिगोपऽइति ह्यनूचानमाहुः ॥३॥ अथ यदेव प्रजामिच्छेत । तेन पितृभ्यऽऋणं जायते तद्ध्येभ्यऽएतत् करोति यदेषाꣳ संतताव्यवच्छिन्ना प्रजा भवति ॥४॥ अथ यदेव वासयेत । तेन मनुष्येभ्य ऋणं जायते तद्ध्येभ्य ऽ एतत् करोति यदेनान् वासयते यदेभ्योऽशनं ददाति स य ऽएतानि सर्वाणि करोति स कृतकर्मा तस्य सर्वमाप्तꣳ सर्वं जितम् ॥५॥

## मनुनौका-कथा १,८,१

मनवे ह वै प्रातः। अवनेग्यमुदकमाजहुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणीऽआपेदे ॥१॥ स हास्मै वाचमुवाद। बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघऽ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयिताऽस्मीति कथं ते भृतिरिति ॥२॥ स होवाच। यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य ऽएव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि स यदा तामतिवर्द्धाऽअथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्द्धाऽअथ मा समुद्रमभ्यवहरासि तर्हि वाऽअतिनाष्ट्रो भवितास्मीति ॥३॥ शश्वद्ध झष ऽआस। स हि ज्येष्ठं वर्द्धतेऽथेतिथीꣳ समां तदौघ ऽआगन्ता तन्मा नावमुपकल्प्योपाऽऽसासै स औघऽउत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति ॥४॥ तमेवं भृत्वा समुद्रमभ्यवजहार। स यतिथीं तत्समां परिदिदेश ततिथीꣳ समां नावमुपकल्प्योपासांचक्रे स ऽऔघ ऽउत्थिते नावमापेदे तꣳ स मत्स्य ऽउपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव[a] ॥५॥ स होवाच। अपीपरं वै त्वा वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावदुदकꣳ समवाऽयात्तावत्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमित्यौघो ह ताः सर्वाः प्रजा निरुवाहाऽथेह मनुरेवैकः परिशिशिषे ॥६॥ सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः। तत्रापि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षामित्यप्सु जुहवांचकार ततः संवत्सरे योषित्संबभूव सा ह पिब्दमानेवोदेयाय तस्यै ह स्म घृतं पदे संतिष्ठते तया मित्रावरुणौ संजग्माते ॥७॥ ताꣳ होचतुः कासीति। मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच यऽएव

---

[a]) °मुधिदु° इति चौसं, °मभिदु° इति काश (२,७,३,३) पाभे.।

मामजीजनत तस्यैवाहमस्मीति तस्यामपित्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावति त्वेवेयाय सा मनुमाजगाम ॥८॥ ता ँह मनुरुवाच कासीति। तव दुहितेति कथं भगवति मम दुहितेति या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साऽऽशीरस्मि तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै माऽवकल्पयिष्यासि बहुः प्रजया पशुभिर्भविष्यासि यामु मया[a] कां चाशिषमाशासिष्यसे सा ते सर्वा समर्धिष्यतऽइति तामेतन्मध्ये यज्ञस्यावाकल्पयन्मध्य ँ ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् ॥९॥ तयार्चञ्छ्राम्यंश्चकार प्रजाकामः। तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्याम्वेनया कां चाशिषमाशास्त सास्मै सर्वा समार्ध्यत ॥१०॥

### वृद्धच्यवन-कथा ४,१,५

यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोक ँ समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे ॥ १ ॥ शर्यातो ह वाऽइदं मानवो ग्रामेण चचार। स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः॥२॥ स शर्यातिभ्यश्चुक्रोध। तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥३॥ शर्यातो ह वाऽईक्षांचक्रे। यत्किमकरं तस्मादिदमापदीति स गोपालांश्चाविपालांश्च स ँह्वयितवाऽउवाच ॥४॥ स होवाच। को वोऽद्येह किंचिदद्राक्षीदिति। ते होचुः पुरुष एवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदां चकार स वै च्यवन इति ॥५॥ स रथं युक्त्वा। सुकन्या ँ शार्यातीमुपाधाय प्रसिष्यन्द स आजगाम यत्रर्षिरास तत् ॥६॥ स होवाच। ऋषे नमस्ते यन्नावेदिषं तेनाहि ँ सिषमियं ँ सुकन्या तया तेऽपह्नुवे

[a]) वैतु. Weber याममुया इति।

सुंजानीतां मे ग्राम इति तस्य ह तत एव ग्रामः संजज्ञे स ह तत एव शर्यातो मानव उद्युयुजे नेदपरꣳ हिनसानीति ॥७॥ अश्विनौ ह वाऽइदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥८॥ तौ होचतुः सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेषऽआवामनुप्रेहीति सा होवाच यस्मै मां पितादान्नैवाहं तं जीवन्तꣳ हास्यामीति तद्धायमृषिराजज्ञौ ॥९॥ स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्माऽएतद् व्याचचक्षे स ह व्याख्यात उवाच यदि त्वैतत्पुनर्ब्रवतः सा त्वं ब्रूतान्न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ यदि त्वा ब्रवतः केनावमसर्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात् पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्ताꣳ हैतदेवोचतुः ॥१०॥ सा होवाच । न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ होचतुः केनावमसर्वौ स्वः केनासमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति ॥११॥ तौ होचतुः । एतꣳ ह्रदमभ्यवहर स येन वयसा कमिष्यते तेनोदैष्यतीति तꣳ ह्रदमभ्यवजहार स येन वयसा चकमे तेनोदेयाय ॥१२॥ तौ होचतुः । सुकन्ये केनावमसर्वौ स्वः केनासमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनासर्वा स्थस्तेनासमृद्धाविति तौ ह तत एवाश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥१३॥ तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवा ऊचुर्न वामुपह्वयिष्यामहे बहु मनुष्येषु सꣳसृष्टमचारिष्टं भिषज्यन्ताविति ॥१४॥ तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्वऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो

वक्ष्याव इति तथेति ताऽउपाह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णँस्तावध्वर्यू यज्ञस्याभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमानऽआगच्छताम् ॥१५॥

## अश्वमेध-महिमा १०,६,४

उषा वाऽअश्वस्य मेध्यस्य शिरः। सूर्य्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः सँवत्सर आत्माश्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वेऽअवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो माꣳसान्यूवध्यꣳ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्द्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वाऽअश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वाऽअश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुराऩश्वो मनुष्यान्त्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥१॥

## स्वाध्याय-महिमा ११,५,७

अथातः स्वाध्यायप्रशꣳसा। प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सक आत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्यशो लोकपक्तिः प्रज्ञा वर्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति ब्राह्मण्यं प्रतिरूपचर्यां यशो लोकपक्तिं लोकः पच्यमानश्चतुर्भिर्द्धर्मैर्ब्राह्मणं भुनक्त्यर्चया च दानेन चाज्येयतया चावध्यतया च ॥१॥ ये ह वै के च श्रमाः। इमे द्यावापृथिवीऽअन्तरेण स्वाध्यायो हैव तेषां परमता काष्ठा य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥२॥ यद्यद्ध वाऽअयं

छन्दसः । स्वाध्यायमधीते तेन-तेन हैवास्य यज्ञक्रतुनेष्टं भवति य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥३॥ यदि ह वा अप्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीतऽआ हैव स नखाग्रेभ्यस्तप्यते य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥४॥ मधु ह वाऽऋचः। घृत ँ ह सामान्यमृतं यजू ँ षि यद्ध वाऽअयं वाकोवाक्यमधीते क्षीरौदनमा ँसौदनौ हैव तौ ॥५॥ मधुना ह वाऽएष देवाँस्तर्पयति । य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥६॥ घृतेन ह वाऽएष देवांस्तर्पयति। य एवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥७॥ अमृतेन ह वाऽएष देवांस्तर्पयति । य एवं विद्वान् यजू ँष्यहरहः स्वाध्यायमधीते तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥ क्षीरौदनमा ँसौदनाभ्या ँ ह वाऽएष देवांस्तर्पयति । य एवं विद्वान् वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते तऽएनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैः भोगैः ॥९॥ यन्ति वाऽआपः । एत्यादित्य एति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न कुर्युरेव ँहैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायं नीधीत तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद् व्रतस्याव्यवच्छेदाय ॥१०॥

[ ५ ]

## जैमिनीय-ब्राह्मणम्[a]

### दधीच आथर्वणस्य कथा ३,६४

दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास। तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदेव विशीर्षाणश्शेरते। स उ ह स्वर्गं

a) सामवेदीयम्।

लोकमुच्चक्राम । स हेन्द्रोऽसुरैरभिवाढ उवाच क नु स दध्यङ् भवाद् इति । तस्मै होचु स्वर्गं वै भगवस्स लोकमुदक्रामदिति । स होवाच नैवास्येह किंचित्परिशिष्टमर्स्तीति । तस्मै होचुरासीदेवेदमश्वशीर्षं येनाश्विभ्यां देववेदं प्राब्रवीत् तत् तु न विद्म यत्राभवदिति । तद्वा अन्विच्छतेति । तद्धान्वीषुः ।

इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । तद्विदच्छर्यणावति ॥[a] इति । शर्यणावद् ध नामैतत् कुरुक्षेत्रस्य जघनार्धे सरस्कम् । तदेतदनुविद्याजह्रुस्तदस्मै प्रायच्छन् । तद् ध स्मासुराणां प्रकाशे धारयति । तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदेव विशीर्षाणश्शेरते ।

### सामविशेष-महिमा ३,१९७

तासु जराबोधीयम् । शाक्त्यास्तरसपुरोडाशाः सत्रमासत । स गौरिवीतिश्शाक्त्यो मृगमहन् । तं तार्क्ष्यस्सुपर्ण उपरिष्टादभ्यवापतत् । तस्मा उपप्रत्यधत्त । तमब्रवीत्—ऋषे, मा मेऽस्थः । यत्कामोऽसि तं ते कामं समर्धयिष्याम इति । किंकामः खल्वहमस्मीत्यब्रवीत् । असितस्य धाम्न्यस्य दुहितरं कामयसे । तस्यै त्वा निवक्ष्यामीति । अथ हासितो धाम्न्य ईर्ष्युरास । तस्य हान्तरिक्षे प्रासाद आस । तद्धास्य दुहितरं जुगुपुः । तं ह स्म पत्रनाड्यामुपगुह्यास्यै कुमार्यै निवहति । तं ह स्मैतेनैव साम्ना प्रातर्बोधयति जार बुध्यस्वेति । तदेव जराबोधीयस्य जराबोधीयत्वम् । सेयं कुमारी गर्भमधत्त । स कुमारोऽजायत । तमसुरा विच्छिद्य परास्यन्तोऽब्रुवञ्जामीगर्भो वा अयं, रक्षो वा इदमजनीति । तमकामयत—समेनमीरयेयमिति । स एतत् सामापश्यत् । तेनैनं समैरयत् । स एव संकृतिः गौरिवीतोऽभवत् । तदेतद्भेषजं प्रायश्चित्तिस्साम । भेषजं वै स तत्प्रायश्चितिमकुरुत ।

---

[a]) जैसं ३,२२,११ ।

## जैमिनीयोपनिषद्-ब्राह्मणम्[a]

### प्रेत-दर्शनम् ३,६,१

उच्चैश्श्रवा ह कौपयेयः कौरव्यो राजाऽऽस। तस्य ह केशी दार्भ्यः पाञ्चालो राजा स्वस्रीय आस। तौ हाऽन्योन्यस्य प्रियावासतुः ॥१॥ स होच्चैश्श्रवाः कौपयेयोऽस्माल्लोकात् प्रेयाय। तस्मिन् ह प्रेते केशी दार्भ्योऽरण्ये मृगयां चचाराऽप्रियं विनिनीषमाणः ॥२॥ स ह तथैव पल्ययमानो मृगान् प्रसरन्नन्तरेणैवोच्चैश्श्रवसं कौपयेयमधिजगाम ॥३॥ तं होवाच दृप्यामि स्वी३ज्जानामीति। न दृप्यसीति होवाच जानासि। स एवास्मि यम्मा मन्यस इति ॥४॥ अथ यद्भगव आहुरिति होवाच य आविर्भवत्यन्येऽस्य लोकमुपयन्तीत्यथ कथमशको म आविर्भवितुमिति ॥५॥ ओमिति होवाच यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आविर्भूवमप्रियं चास्य विनेष्याम्यनु चैनं शासिष्यामीति ॥६॥ तथा भगव इति होवाच। तं वै नुत्वा परिष्वजा इति। तं ह स्म परिष्वजमानो यथा धूमं वापीयाद्वायुं वाकाशं वाग्न्यार्चिं वाऽपोवैवं ह स्मैनं व्येति। न ह स्मैनम्परिष्वङ्गायोपलभते ॥७॥

---

[a]) सामवेदीयम्।

# आरण्यके

[ १ ]

## ऐतरेयारण्यकम्[a]

**स्वाध्याय-नियमाः** ५,३,३

नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मै नासंवत्सर इत्येके कामं पित्रे वाचार्याय वा शंसेदात्मनो हैवास्य तच्छस्तं भवति। होतृशस्त्रेषूक्थशा यज सोमस्येत्येकः प्रैषः सनाराशंसेष्वनाराशंसेषु वा होत्रकाणाम्। उक्थशा यज सोमानामिति। तदिदमहर्नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नो एवासंवत्सरवासिने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्राप्तायैतं देशम्। न भूयः सकृद्वदनाद् द्विर्गदनाद्वा द्व्य्येव। एक एकस्मै प्रब्रूयादिति ह स्माह जातूकर्ण्यः। न वत्से च न तृतीय इति। न तिष्ठंस्तिष्ठते न व्रजन्व्रजते न शयानः शयानाय नोपर्यासीन उपर्यासीनायाध एवासीनोऽध आसीनाय। नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वोर्ध्वज्ञुरनपश्रितोऽधीयीत न मांसं भुक्त्वा न लोहितं दृष्ट्वा न गतासुं नाव्रत्यमाक्रम्य नात्त्वा नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन कारयित्वा न स्नात्वा न वर्णकेनानुलिप्य न स्रजमपिनह्य न स्त्रियमुपगम्य नोल्लिख्य नाविलिख्य। नेदमेकस्मिन्नहनि समापयेदिति ह स्माह जातूकर्ण्यः समापयेदिति गालवो यदन्यत् प्राक् तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्यायनोऽन्यमन्यास्मिन्देशे शमयमान इति। यत्रेदमधीयीत न तत्रान्यदधीयीत यत्र त्वन्यदधीयीत काममिदं तत्राधीयीत। नेदमनधीयन्स्नातको भवति यद्यप्यन्यद् बह्वधीया-

---

[a]) ऋग्वेदीयम्।

न्नैवेदमनधीयन्स्नातको भवति । नास्मादधीतात् प्रमाद्येद् यद्यप्यन्यस्मात् प्रमाद्येन्नैवास्मात्प्रमाद्येन्नो एवास्मात्प्रमाद्येत् । अस्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात् । अलं सत्यं विद्यात् । नेदंविदनिदंविदा समुद्दिशेन्न सह भुञ्जीत न सधमादी स्यात् । अथातः स्वाध्यायधर्मं व्याख्यास्यामः । उप पुराणे-नापीते कक्षोदके पूर्वाह्णे न संभिन्नासु च्छायास्वपराह्णे नाध्यूळ्हे मेघेऽपर्तौ वर्षे त्रिरात्रं वैदिकेनाध्यायेनान्तरियान्नास्मिन्कथां वदेत नास्य रात्रौ चन चिकीर्तयिषेत् । तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यै-तदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति ॥

[ २ ]

## तैत्तिरीयारण्यकम्[a]

### पञ्चमहायज्ञाः २,१०,१

पञ्च वा एते महायज्ञाः संतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः संतिष्ठते यत्पितृभ्यः स्वधाकरोत्यप्यपस्तत्पितृ-यज्ञः संतिष्ठते यद् भूतेभ्यो बलिꣳ हरति तद् भूतयज्ञः संतिष्ठते यद् ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद् ब्रह्मयज्ञः संतिष्ठते यदृचोऽधीते पयसः कूल्या अस्य पितॄन्त्स्वधा अभिवहन्ति यद्यजूꣳषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्या यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशꣳसी-र्मेदसः कूल्या अस्य पितॄन्त्स्वधा अभिवहन्ति यदृचोऽधीते

---

a) कृष्णयजुर्वेदीयम् ।

पर्यआहुतिभिरेव तद्देवाꣳ स्तर्पयति यद्यजूꣳषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशꣳसीर्मेदाहुतिभिरेव तद्देवाꣳ स्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ॥

---

# उपनिषदः

## [ १ ]

## केनोपनिषद्[a]

### ब्रह्म-महिमा

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त ॥३,१॥ त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ॥३,२॥ तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ ३,३ ॥ तदभ्यद्रवत्तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥३,४॥ यस्मिँस्त्वयि किं वीर्यमित्यपीद९ सर्वं दहेयं यदिदं पृथिव्यामिति ॥३,५॥

तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥३,६॥ अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥३,७॥ तदभ्यद्रवत्तमभ्यवदत् कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥३,८॥ तस्मिंस्त्वयि किं वीर्यमित्यपीद९सर्वमाददीय यदिदं पृथिव्यामिति ॥३,९॥ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥३,१०॥ अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥३,११॥ स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं ता९होवाच किमेतद्यक्षमिति ॥३,१२॥

---

[a]) सामवेदीया ।

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥४,१॥ तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्तेन ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥४,२॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥४,३॥ तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इतीति न्यमीमिषदा३ इत्यधिदैवतम् ॥४,४॥ अथाध्यात्मं यदेतद् गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं संकल्पः ॥४,५॥ तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाऽभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥४,६॥ उपनिषदं भो ब्रूहीत्युक्ता य उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥४,७॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् ॥४,८॥ यो वा एतामेवं वेदापहत्य पाप्मानमन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥४,९॥

[ २ ]

## तैत्तिरीयोपनिषद्[a]

### शिक्षाऽध्यायः

ऋतं च स्वाध्यायप्रवचने च । सत्यञ्च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्नि-होत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च ।

---

a) कृष्णयजुर्वेदीया ।

मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः ॥१,९,१॥

अहं वृक्षस्य रेरिव। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि। द्रविण ꣳ सवर्चसम्। सुमेधा अमृतोक्षितः। इति त्रिशङ्कोर्वेदानुवचनम् ॥१,१०,१॥

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥१,११,१॥ देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माक ꣳ सुचरितानि। तानि त्वयोपास्यानि ॥१,११,२॥ नो इतराणि। ये के चास्माच्छ्रेया ꣳ सो ब्राह्मणाः। तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥१,११,३॥ ये तत्र ब्राह्मणाः सम्मार्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्त्तेरन्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम् ॥१,११,४॥

## सर्वात्म-भावः

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता। य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥३,६,१॥

अन्नं न निन्द्यात्। तद् व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥३,७,१॥

अन्नं न परिचक्षीत। तद् व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥३,८,१॥

अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या ॥३,९,१॥

न कञ्चन वसतौ प्रत्याचक्षीत। तद् व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्न॰राद्धम्। मुखतोऽस्मा अन्न॰राध्यते। एतद्वै मध्यतोऽन्न॰राद्धम्।

मध्यतोऽस्मा अन्न ँ राध्यते । एतद्वा अन्ततोऽन्न ँ राद्धम् । अन्ततोऽस्मा अन्न ँ राध्यते । ॥३,१०,१॥ य एवं वेद । क्षेम इति वाचि । योग-क्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति ॥३,१०,२॥

यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति ॥३,१०,३॥

तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येनं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ॥३,१०,४॥

[ ३ ]

## ऐतरेयोपनिषद्[a]

### जन्म-विद्या

पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥४,१॥ तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति साऽस्यैतमात्मानमत्र गतं भावयति ॥४,२॥ सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति । स यत् कुमारं

a) ऋग्वेदीया ।

जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥४,३॥ सोऽस्याऽयमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्याऽयमितर आत्मा कृतकृत्यो वयोगतः प्रैति। स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥४,४॥ तदुक्तमृषिणा– गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा। शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति। गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥४,५॥ स एवं विद्वानस्माच्छरीर-भेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥४,६॥

## आत्म-विद्या

कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा पश्यति येन वा श्रृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥५,१॥ यदेतद्धृदयं मनश्चैतत्। संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥५,२॥ एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च भूतानि पृथिवी वायुराकाश आपो ज्योतींषी-त्येतानीमानि च क्षुद्रमिश्राणीव। बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥५,३॥ स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान्कामाना-प्त्वाऽमृतः समभवत् समभवत् ॥५,४॥

[ ४ ]

## छान्दोग्योपनिषद्[a]

### उषस्तेश्चाक्रायणस्य कथा १,१०

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥१॥ स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे तꣳ होवाच । नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥२॥ एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच ॥३॥ न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमां न खादन्निति होवाच कामो म उदपानमिति ॥४॥ स ह खादित्वाऽतिशेषान् जायाया आजहार साग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥५॥ स ह प्रातः संजिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्राꣳराजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥६॥ तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥७॥ तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश । स ह प्रस्तोतारमुवाच ॥८॥ प्रस्तोतर् या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥९॥ एवमेवोद्गातारमुवाचोद्गातर् या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यासि मूर्धा ते विपतिष्यतीति ॥१०॥ एवमेव प्रतिहर्तारमुवाच प्रतिहतर् या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति । ते ह समारतास्तूष्णीमासां चक्रिरे ॥११॥

१,११

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि

---

[a]) सामवेदीया ।

चाक्रायण इति होवाच ॥१॥ स होवाच भगवन्तं वा अहमेभिः सर्वैरा-
र्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्याऽन्यानवृषि ॥२॥ भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति । तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति । तथेति ह यजमान उवाच ॥३॥ अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्ताव-मन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ॥४॥

प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसं-विशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेद-विद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥५॥ अथ हैन-मुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ॥६॥ आदित्य इति होवाच । सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥७॥ अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ॥८॥ अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥९॥

### ब्रह्मोपासन-महिमा २,२३

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व

एते पुण्यलोका भवन्ति ब्रह्मसꣳस्थोऽमृतत्वमेति ॥१॥ प्रजापति-र्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥२॥ तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओꣳकारः संप्रास्रवत् तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् संतृण्णोङ्कार एवेदꣳ सर्वमोङ्कार एवेदꣳ सर्वम् ॥३॥

### अध्यात्म-संकल्पः ३,१४

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥१॥ मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥२॥ एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्याया-नन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ॥३॥ सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद् ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥४॥

### चिरञ्जीव-संकल्पः ३,१६

पुरुषो वाव यज्ञः तस्य यानि चतुर्विꣳशतिवर्षाणि तत् प्रातःसवनं चतुर्विꣳशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳसर्वं वासयन्ति ॥१॥ तं चेदेतस्मिन् वयसि किंचिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्य-न्दिनꣳसवनमनुसंतनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सी-येत्युद्धैव तत एत्यगदो ह भवति ॥२॥ अथ यानि चतुश्चत्वारिꣳश-

द्वर्षाणि तन्माध्यन्दिनꣳसवनम् चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳसवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳसर्वꣳरोदयन्ति ॥३॥ तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यान्दिनꣳसवनं तृतीयसवनमनुसंतनुतेति माऽहं प्राणानांꣳरुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥४॥ अथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदꣳसर्वमाददते ॥५॥ तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥६॥ एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥७॥

३.१७

स यदशिशिषति यत् पिपासति यन्न रमते ता अस्य दीक्षाः ॥१॥ अथ यदश्नाति यत् पिबति यद्रमते तदुपसदैरेवेति ॥२॥ अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥३॥ अथ यत्तपो दानमार्जवमहिꣳसा सत्यवचनमिति ता अस्य दक्षिणाः ॥४॥ तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथः ॥५॥ तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचाऽपिपास एव स बभूव सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति तत्रैते द्वे ऋचौ भवतः ॥६॥ आदित् प्रत्नस्य रेतसः। उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥७॥

## सत्य-महिमा ४,४

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥१॥ सा हैनमुवाच नाहमेतद् वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥२॥ स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥३॥ तꣳहोवाच किंगोत्रो नु सोम्यासीति । स होवाच नाहमेतद् वेद भो यद्गोत्रोहमस्म्यपृच्छं मातरꣳसा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳसत्यकामो जाबालोस्मि भो इति ॥४॥ तꣳहोवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳसोम्याहरोप त्वा नेष्ये न सत्यादगा इति । तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳसंपेदुः ॥५॥

## प्राण-महिमा ५,१

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥१॥ यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग् वाव वसिष्ठः ॥२॥ यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ॥३॥ यो ह वै संपदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव संपत् ॥४॥ यो ह वा आयतनं वेदायतनꣳह स्वानां भवति

मनो ह वा आयतनम् ॥५॥ अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳश्रेयानस्म्यहꣳश्रेयानस्मीति ॥६॥ ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥७॥ सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥८॥ चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥९॥ श्रोत्रꣳहोच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अश्रृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥१०॥ मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥११॥ अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून् संखिदेदेवमितरान् प्राणान् समखिदत्तꣳहाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥१२॥ अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति ॥१३॥ अथ हैनꣳश्रोत्रमुवाच यदहꣳसंपदस्मि त्वं तत्संपदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥१४॥ न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनाꣳसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥१५॥

राज्ञोऽश्वपतेरुपदेशः ५,११

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को न्वात्मा किं ब्रह्मेति ॥१॥ ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥२॥ स ह संपादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताऽहमन्यमभ्यनुशासानीति ॥३॥ तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥४॥ तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥५॥ ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳहैव वदेदात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि तमेव नो ब्रूहीति ॥६॥ तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ॥७॥

५,१८

तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥१॥ तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥२॥

५,२४

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत् स्यात् ॥१॥ अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥२॥ तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥३॥ तस्मादु हैवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥४॥ यथेह क्षुधिता बाला मातरं पर्युपासत एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥५॥

## सदेकमूलोपदेशः ६,१

श्वेतकेतुर्हाऽऽरुणेय आस तꣳह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्। न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥१॥ स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय। तꣳह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥२॥ येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति। कथं नु भगवः स आदेशो भवतीति ॥३॥ यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥४॥ यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥५॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥६॥ न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद् ब्रवीत्विति तथा सोम्येति होवाच ॥७॥

६,२

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत ॥१॥ कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥२॥ तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥३॥ ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहीति ता अन्नमसृजन्त । तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥४॥

६,८

उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥१॥ स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥२॥ अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥३॥ तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥४॥ अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति

तत्रैतदेव शुङ्गमुत्पतित९सोम्य विजानीहि नेदममूलं भविष्यतीति ॥५॥ तस्य क्व मूल९ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥६॥ स य एषोऽणिमैतदात्म्यमिद९ सर्वं तत्सत्य९स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥७॥

६,९

यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणा९रसान् समवहारमेकता९रसं गमयन्ति ॥१॥ ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥२॥ त इह व्याघ्रो वा सि९हो वा वृको वा वराहो वा कीटो वा पतङ्गो वा द९शो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥३॥ स य एषोऽणिमैतदात्म्यमिद९ सर्वं तत्सत्य९ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥४॥

६,१०

इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥१॥ एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सि९हो वा वृको वा वराहो वा कीटो वा पतङ्गो वा द९शो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥२॥ स य एषोऽणिमैतदात्म्यमिद९

सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

६,११

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥१॥ अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥२॥ जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

६,१२

न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति ॥१॥ तꣳ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति ॥२॥ श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

६,१३

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥१॥ यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते तꣳ होवाचात्र वाव किल तत्सोम्य न निभालयसेऽत्रैव

किलेति ।।२।। स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।।३।।

६,१४

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ् वोदङ् वाऽधराङ् वा प्रत्यङ् वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ।।१।। तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयाद् एतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ।।२।। स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।।३।।

६,१५

पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ।।१।। अथ यदाऽस्य वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ।।२।। स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ।।३।।

६,१६

पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ

हन्यते ॥१॥ अथ यदि तस्याऽकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥२॥ स यथा तत्र नादाह्येतैतदात्म्यमिद९ सर्वं तत्सत्य९स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥३॥

**सनत्कुमार-नारद-संवादः** ७,१

अधीहि भगव इति होपससाद सनत्कुमारं नारदस्त९ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥१॥ स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेद९ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य९राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥२॥ सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मविच्छ्रुत९ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति त९होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥३॥ नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥४॥ स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥५॥

७,२३

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥१॥

७,२४

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ

[९]

# नृसिंहोत्तरतापिन्युपनिषद्[1]

## आत्मसिद्ध्युपदेशः १

देवा ह वै प्रजापतिमब्रुवन्निममेव नो भगवन्नोंकारमात्मानमुपदिशेति तथेत्युपद्रष्टानुमन्तैष आत्मा नृसिंहश्चिद्रूप एवाविकारो ह्युपलब्धः सर्वस्य सर्वत्र न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव स वा एष आत्मा पर एषैव सर्वं तथाहि प्रज्ञैनैषा विद्या जगत्सर्वमात्मा परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यन्यत्रान्यन्न विजानात्यनु-भूतेर्माया च तमोरूपानुभूतिस्तदेतज्जडं मोहात्मकमनन्तमिदं रूपमस्यास्य व्यञ्जिका नित्यनिवृत्तापि मूढैरात्मेव दृष्टास्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वा-सिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन सैषा वटबीजसामान्यवदनेकवटशक्ति-रेकैव तद्यथा वटबीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् वटान् सबीजा-नुत्पाद्य तत्र तत्र पूर्णं सत्तिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि पूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवति सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाङ्कुरेष्वपि गुण-भिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमभिमन्ता जीवो नियन्तेश्वरः सर्वाहंमानी हिरण्यगर्भ-स्त्रिरूपः ईश्वरवद् व्यक्तचैतन्यः सर्वगो ह्येष ईश्वरः क्रियाज्ञानात्मा सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वास्ववस्थासु तथाप्यल्पाः स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्मादद्वय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः प्रमाणैरेतै-रवगतः सत्तामात्रं हीदं सर्वं सदेव पुरस्तात्सिद्धं हि ब्रह्म न ह्यत्र किंचानुभूयते नाविद्यानुभवात्मा न स्वप्रकाशो सर्वसाक्षिण्यविक्रियेऽद्वये

[1]) अथर्ववेदीया ।

पश्यतेह्यपि सन्मात्रमसदन्यत्सत्यं हीत्थं पुरस्तादयोनि स्वात्मस्थमानन्दचिद्घनं सिद्धं ह्यसिद्धं तद्विष्णुरीशानो ब्रह्मान्यदपि सर्वं सर्वगतं सर्वमत एव शुद्धोऽबाध्यस्वरूपो बुद्धः सुखस्वरूप आत्मा न ह्येतन्निरात्मकमपि नात्मा पुरतो हि सिद्धो न हीदं सर्वं कदाचिदात्मा हि स्वमहिमस्थो निरपेक्ष एक एव साक्षी स्वप्रकाशः किं तन्नित्यमात्मात्र ह्येव न विचिकित्स्यमेतद्धीदं सर्वं साधयति द्रष्टा द्रष्टुः साक्ष्यविक्रियः सिद्धो निरवद्यो बाह्याभ्यन्तरवीक्षणात् सुविस्फुटतमः स परस्ताद् ब्रूतैष दृष्टोऽदृष्टोऽव्यवहार्योऽप्यल्पो नाल्पः साक्ष्यविशेषोऽनन्योऽसुखदुःखोऽद्वयः परमात्मा सर्वज्ञोऽनन्तोऽभिन्नोऽद्वयः सर्वदा संवित्तिर्मायया नासंवित्तिः स्वप्रकाशो यूयमेव दृष्टाः किमद्वयेन द्वितीयमेव न यूयमेव ब्रूह्येव भगवन्निति देवा ऊचुर्यूयमेव दृश्यते चेन्नात्मज्ञा असङ्गो ह्ययमात्मातो यूयमेव स्वप्रकाशा इदं हि सत्संविन्मयत्वाद्यूयमेव नेति होचुर्हन्तासङ्गा वयमिति होचुः कथं पश्यन्तीति होवाच न वयं विद्म इति होचुस्ततो यूयमेव स्वप्रकाशा इति होवाच न च सत्संविन्मया एतौ हि पुरस्तात् सुविभातमव्यवहार्यमेवाद्वयं ज्ञातो नैष विज्ञातो विदिताविदितात्पर इति होचुः स होवाच तद्वा एतद् ब्रह्माद्वयं ब्रह्मत्वान्नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रमात्मैवाव्यवहार्यं केन च तत्तदेतदात्मानमोमित्यपश्यन्तः पश्यत तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यमित्यों सत्यं तदेतत्पण्डिता एव पश्यन्त्येतद्धयशब्दमस्पर्शमरूपमरसमगन्धमवक्तव्यमनादातव्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहंकर्तयितव्यमचेतयितव्यमप्राणयितव्यमनपानायितव्यमव्यानयितव्यमनुदानयितव्यमसमानायितव्यमानिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमभयमप्यौपनिषदमेव

सुविभातं सकृद्विभातं पुरतोऽस्मात्सर्वस्मात्सुविभातमद्वयं पश्यत हंसः सोऽहमिति स होवाच किमेष दृष्टोऽदृष्टो वेति दृष्टो विदिताविदितात्पर इति होचुः क्वैषा कथमिति होचुः किं तेन न किं चनेति होचुर्यूय-मेवाश्चर्यरूपा इति होवाच न चेत्याहुरोमित्यनुजानीध्वं ब्रूतैनमिति ज्ञातोऽज्ञातश्चेति होचुर्न चैनमिति होचुरिति ब्रूतैवैवमात्मसिद्धमिति होवाच पश्याम एव भगवो न च वयं पश्यामो नैव वयं वक्तुं शक्नुमो नमस्तेऽस्तु भगवन् प्रसीदेति होचुर्न भेतव्यं पृच्छतेति होवाच क्वैषानु-ज्ञेत्येष एवात्मेति होवाच ते होचुर्नमस्तुभ्यं वयं त इति ह प्रजापति-र्देवाननुशशासानुशशासेति ॥ तदेष श्लोकः ॥ ओतमोतेन जानीयादनु-ज्ञातारमान्तरम् । अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेत् ॥

[ १० ]

## शारीरकोपनिषद्[a]

### प्रकृतिपुरुषविवेकोपदेशः

अथातः पृथिव्यादिमहाभूतानां समवायं शरीरम् । यत्कठिनं सा पृथिवी यद् द्रवं तदापो यदुष्णं तत्तेजो यत्संचरति स वायुर्यत्सुषिरं तदाकाशम् । श्रोत्रादीनि ज्ञानेन्द्रियाणि । श्रोत्रमाकाशे वायौ त्वग् अग्नौ चक्षुरप्सु जिह्वा पृथिव्यां घ्राणमिति । एवमिन्द्रियाणां यथाक्रमेण शब्द-स्पर्शरूपरसगन्धाश्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः । वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि । तेषां क्रमेण वचनादान-गमनविसर्गानन्दाश्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः । मनोबुद्धिरहंकारश्चित्तमित्यन्तःकरणचतुष्टयम् । तेषां क्रमेण संकल्प-विकल्पाध्यवसायाभिमानावधारणास्वरूपाश्चैते विषयाः । मनः स्थानं गलान्तं बुद्धेर्वदनमहंकारस्य हृदयं चित्तस्य नाभिरिति । अस्थिचर्मनाडी-रोममांसाश्चेति पृथिव्यंशाः । मूत्रश्लेष्मरक्तशुक्रस्वेदा अबंशाः ।

---

[a]) कृष्णयजुर्वेदीया ।

क्षुत्तृष्णालस्यमोहमैथुनान्यग्नेः । प्रचारणविलेखनस्थूलाद्युन्मेषादि वायोः । कामक्रोधलोभमोहभयान्याकाशस्य । शब्दस्पर्शरूपरसगन्धाः पृथिवीगुणाः । शब्दस्पर्शरूपरसाश्चापां गुणाः । शब्दस्पर्शरूपाण्यग्निगुणाः । शब्दस्पर्शाविति वायुगुणौ । शब्द एक आकाशस्य । सात्त्विकराजसतामसलक्षणानि त्रयो गुणाः । अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः । अक्रोधो गुरुशुश्रूषा शौचं संतोष आर्जवम् ॥१॥ अमानित्वमदाम्भित्वमास्तिकत्वमहिंस्रता । एते सर्वे गुणाः ज्ञेयाः सात्त्विकस्य विशेषतः ॥२॥ अहं कर्त्तास्म्यहं भोक्तास्म्यहं वक्ताभिमानवान् । एते गुणा राजसस्य प्रोच्यन्ते ब्रह्मवित्तमैः ॥३॥ निद्रालस्यौ मोहरागौ मैथुनं चौर्यमेव च । एते गुणास्तामसस्य प्रोच्यन्ते ब्रह्मवादिभिः ॥४॥ ऊर्ध्वे सात्त्विको मध्ये राजसोऽधस्तामस इति । सत्यज्ञानं सात्त्विकम् । धर्मज्ञानं राजसम् । तिमिरान्धं तामसमिति । जाग्रत्स्वप्नसुषुप्तितुरीयमिति चतुर्विधा अवस्थाः । ज्ञानेन्द्रियकर्मेन्द्रियान्तःकरणचतुष्टयं चतुर्दशकरणयुक्तं जाग्रत् । अन्तःकरणचतुष्टयैरेव संयुक्तः स्वप्नः । चित्तैककरणा सुषुप्तिः । केवलजीवयुक्तमेव तुरीयमिति । उन्मीलितनिमीलितमध्यस्थजीवपरमात्मनोर्मध्ये जीवात्मा क्षेत्रज्ञ इति विज्ञायते । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया । शरीरं सप्तदशभिः सुसूक्ष्मं लिङ्गमुच्यते ॥५॥ मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः । एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥६॥ श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् । पायूपस्थौ करौ पादौ वाक्चैव दशमी मता ॥७॥ शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च । त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि तु ॥८॥ चतुर्विंशतिरव्यक्तं प्रधानं पुरुषः परः ॥९॥

[ ११ ]

# वज्रसूचिकोपनिषद्[a]

## ब्राह्मणसल्लक्षणोपदेशः

यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारमशेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामलकवत् साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो भावमात्सर्यतृष्णाशामोहादिरहितो दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तत एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः। अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव सच्चिदानन्दमात्मानमद्वितीयं ब्रह्म भावयेदात्मानं सच्चिदानन्दं ब्रह्म भावयेदित्युपनिषद् ॥

---

[a]) सामवेदीया।

# वेदाङ्गानि

[ १ ]

## आश्वलायनगृह्यसूत्रम्[*]

### आहिताग्नि-प्रेतकर्म ४,१

आहिताग्निश्चेदुपतपेत् प्राच्यामुदीच्यामपराजितायां वा दिश्युदवस्येत् ॥१॥ ग्रामकामा अग्नय इत्युदाहरन्ति ॥२॥ आशंसन्त एनं ग्राममाजिगामिषन्तोऽगदं कुर्युरिति ह विज्ञायते ॥३॥ अगदः सोमेन पशुनेष्ट्येष्ट्वाऽवस्येत् ॥४॥ अनिष्ट्वा वा ॥५॥ संस्थिते भूमिभागं खानयेद् दक्षिणपूर्वस्यां दिशि दक्षिणापरस्यां वा ॥६॥ दक्षिणाप्रवणं प्राग्दक्षिणाप्रवणं वा प्रत्यग्दक्षिणाप्रवणमित्येके ॥७॥ यावानुद्बाहुकः पुरुषस्तावदायामम् ॥८॥ व्याममात्रं तिर्यक् ॥९॥ वितस्त्यर्वाक् ॥१०॥ अभित आकाशं श्मशानम् ॥११॥ बहुलौषधिकम् ॥१२॥ कण्टकिक्षीरिणस्त्विति यथोक्तं पुरस्तात् ॥१३॥ यत्र सर्वत आपः प्रस्यन्देरन्नेतदादहनस्य लक्षणं श्मशानस्य ॥१४॥ केशश्मश्रुलोमनखानीत्युक्तं पुरस्तात् ॥१५॥ विगुल्फं बर्हिराज्यं च ॥१६॥ दधन्यत्र सर्पिरानयन्त्येतत् पित्र्यं पृषदाज्यम् ॥१७॥

४,२

अथैतां दिशमग्नीन्नयन्ति यज्ञपात्राणि च ॥१॥ अन्वञ्चं प्रेतमयुजोऽमिथुनाः प्रवयसः ॥२॥ पीठचक्रेण गोयुक्तेनेत्येके ॥३॥ अनुस्तरणीं गामजां वैकवर्णां कृष्णामेके ॥४॥ सव्ये बाहौ बद्ध्वाऽनुसंकालयन्ति ॥५॥ अन्वञ्चोऽमात्या अधोनिवीताः प्रवृत्तशिखा ज्येष्ठप्रथमाः कनिष्ठजघन्याः ॥६॥ प्राप्यैवं भूमिभागं कर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षति 'अपेत वीत

---

*) ऋग्वेदीयम् ।

वि च सर्पतात:' (ऋ१०,१४,९) इति ॥७॥ दक्षिणपूर्व उद्धृतान्त आहवनीयं निदधाति ॥८॥ उत्तरपश्चिमे गार्हपत्यम् ॥९॥ दक्षिणपश्चिमे दक्षिणम् ॥१०॥ अथैनमन्तर्वेदीध्माचितिं चिनोति यो जानाति ॥११॥ तस्मिन् बर्हिरास्तीर्य कृष्णाजिनं चोत्तरलोम तस्मिन् प्रेतं संवेशयन्त्युत्तरेण गार्हपत्यं हृत्वाऽऽहवनीयमभिमुखशिरसम् ॥१२॥ उत्तरतः पत्नीम् ॥१३॥ धनुश्च क्षत्रियाय ॥१४॥ तामुत्थापयेद्देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वा 'उदीर्ष्व नार्यभि जीवलोकम्' (ऋ १०,१८,८) इति ॥१५॥ कर्ता वृषले जपेत् ॥१६॥ धनुर्हस्तादाददानो मृतस्येति धनुः ॥१७॥ उक्तं वृषले ॥१८॥ अधिज्यं कृत्वा सञ्चितिमचित्वा संशीर्यानुप्रहरेत् ॥१९॥

[ २ ]

## निरुक्तम् (यास्ककृतम्)

### नाम्नां धातुजत्ववादः १

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च। तत्र नामान्याख्यातजानीति; शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके। तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि। यथा गौरश्वः पुरुषो हस्तीति। अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत् कर्म कुर्यात् सर्वं तत् सत्त्वं तथाऽऽचक्षीरन्। यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्यात्। यत्किंचित्तृन्द्यात् तृणं तत्। अथ चेत् सर्वाण्याख्यातजानि नामानि स्युः यावद्भिर्भावैः सम्प्रयुज्येत तावद्भयो नामधेयप्रतिलम्भः स्यात्। तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥१२॥

अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्। पुरुषं पुरिशय इत्याचक्षीरन्। अष्टेत्यश्वम्। तर्दनमिति तृणम्। अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति। प्रथनाद्

पृथिवीत्याहुः। क एनामप्रथयिष्यत् किमाधारश्चेति। अथानान्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान् संचस्कार शाकटायनः। एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च। अथापि सत्त्वपूर्वो भाव इत्याहुः। अपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति। तदेतन्नोपपद्यते ॥१३॥

यथो हि नु वै एतत्। तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति। यथो एतद् यः कश्च तत् कर्म कुर्यात् सर्वं तत् सत्त्वं तथाऽऽचक्षीरन्निति। पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति। एतेनैवोत्तरः प्रत्युक्तः। यथो एतद् यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति। सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति। यथो एतद् निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति। भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः। प्रथनात्पृथिवीत्याहुः। क एनामप्रथयिष्यत् किमाधारश्चेति। अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः। अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते। यथो एतत् पदेभ्यः पदेतरार्धान् संचस्कारेति योऽनन्वितेऽर्थे संचस्कार स तेन गर्ह्यः। सैषा पुरुषगर्हा न शास्त्रगर्हा इति। यथो एतदपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति। पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति। बिल्वं भरणाद् वा भेदनाद्वा ॥१४॥

**निघण्टु-विषयः** १

साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं

समाम्नासिषुः । वेदं च वेदाङ्गानि च । बिल्मं भिल्मं भासनमिति वा ॥ एतावन्तः समानकर्माणो धातवः । धातुर्दधातेः । एतावन्त्यस्य सत्त्वस्य नामधेयान्येतावतामर्थानामिदमभिधानम् । नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति । तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत् ।

अश्वं न त्वा वारवन्तम् (ऋ १,२७,१)

अश्वमिव त्वा वालवन्तम् । वाला दंशवारणार्था भवन्ति । दंशो दशतेः ।

मृगो न भीमः कुचरो गिरिष्ठाः (ऋ १,१५४,२)

मृग इव भीमः कुचरो गिरिष्ठाः । मृगो मार्ष्टेर्गतिकर्मणः । भीमो बिभ्यत्यस्मात् । भीष्मोऽप्येतस्मादेव । कुचर इति चरति कर्म कुत्सितम् । अथ चेद्देवताभिधानं क्वायं न चरतीति । गिरिष्ठा गिरिस्थायी । गिरिः पर्वतः । समुद्गीर्णो भवति । पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा । अर्धमासपर्व देवानास्मिन् प्रीणन्तीति । तत् प्रकृतीतरत् सन्धिसामान्यात् । मेघस्थायी । मेघोऽपि गिरिरेतस्मादेव ॥ तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतमित्याचक्षते । तदुपरिष्टाद् व्याख्यास्यामः । नैघण्टुकानि नैगमानीहेह ॥२०॥

मन्त्रेष्वितिहासः २

तत्रेतिहासमाचक्षते । देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयानभिषेचयाञ्चक्रे । देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणाः । अधर्मस्त्वया चरितः । ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम् । तस्मात्ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति ॥१०॥

### देवतोपपरीक्षा ७

तद् येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा । यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति । अथान्यत्र यज्ञात् प्राजापत्या इति याज्ञिकाः । नाराशंसा इति नैरुक्ताः । अपि वा सा कामदेवता स्यात् । प्रायोदेवता वा । अस्ति ह्याचारो बहुलं लोके । देवदेवत्यमतिथिदेवत्यं पितृदेवत्यम् । याज्ञदैवतो मन्त्र इति । अपि ह्यदेवता देवतावत् स्तूयन्ते । यथाश्वप्रभृतीन्योषधिपर्यन्तानि । अथाऽप्यष्टौ द्वन्द्वानि । स न मन्येतागन्तूनिवार्थान् देवतानाम् । प्रत्यक्षदृश्यमेतद् भवति । माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयते । एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति । अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः । प्रकृतिसार्वनाम्याच्च । इतरेतरजन्मानो भवन्ति । इतरेतरप्रकृतयः । कर्मजन्मानः । आत्मजन्मानः । आत्मैवैषां रथो भवति आत्माऽश्वः । आत्मायुधम् आत्मेषवः । आत्मा सर्वं देवस्य देवस्य ॥४॥

तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानः । वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः । सूर्यो द्युस्थानः । तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति । अपि वा कर्मपृथक्त्वात् । यथा होताऽध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः । अपि वा पृथगेव स्युः । पृथग्घि स्तुतयो भवन्ति । तथाभिधानानि । यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः । तत्र संस्थानैकत्वं सम्भोगैकत्वं चोपेक्षितव्यम् । यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वं, सम्भोगैकत्वं च दृश्यते । यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च संभोगः । अग्निना चेतरस्य लोकस्य । तत्रैतन्नरराष्ट्रमिव ॥५॥

[ ३ ]

## महाभाष्यम् (पतञ्जलिकृतम् )

### शब्दप्रयोगस्य विशालक्षेत्रत्वम् १,१,१

सर्वे खल्वप्येते शब्दा देशान्तरे प्रयुज्यन्ते । न चैत उपलभ्यन्ते ।

उपलब्धौ यत्नः क्रियताम् । महान् हि शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रम् ॥ एतस्मिन्नतिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा । शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति विकार एनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्येषु गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु ॥ ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते । क । वेदे । 'यद्वो रेवती रेवत्यं तदूष' (काठ १,८) । 'यन्मे नरः श्रुत्यं ब्रह्म चक्र' (ऋ १,१६५,११) । 'यत्रा नश्चक्रा जरसं तनूनाम्' (ऋ १,८९,९) इति ॥५॥

## शिष्टप्रयोगस्य पुण्यमयत्वम् १,१,१

शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते तत्तुल्यं वेदशब्देन । वेदशब्दा अप्येवमभिवदन्ति । योऽग्निष्टोमेन यजते य उ चैनमेवं वेद । योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद । अपर आह । तत्तुल्यं वेदशब्देनेति । यथा वेदशब्दा नियमपूर्वकमधीताः फलवन्तो भवन्त्येवं यः शास्त्रपूर्वकं शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति । अथवा पुनरस्तु ज्ञान एव धर्म इति । ननु चोक्तं ज्ञाने धर्म इति चेत्तथाऽधर्म इति । नैष दोषः । शब्दप्रमाणका वयम् । यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च शब्दज्ञाने धर्ममाह नापशब्दज्ञानेऽधर्मम् । यच्च पुनरशिष्टाप्रतिषिद्धं नैव तद्दोषाय भवति नाभ्युदयाय । तद्यथा—हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति

नाप्यभ्युदयाय । अथवाऽभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने । योऽपशब्दाञ्जानाति शब्दानप्यसौ जानाति । तदेवं ज्ञाने धर्म इति ब्रुवतोऽर्थादापन्नं भवत्यपशब्दज्ञानपूर्वके शब्दज्ञाने धर्म इति । अथवा कूपखानकवदेतद्भविष्यति तद्यथा कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति सोऽप्सु संजातासु तत एव तं गुणमासादयति येन स च दोषो निर्हण्यते भूयसा चाभ्युदयेन योगो भवत्येवमिहापि यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन स च दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति । यदप्युच्यत आचारे नियम इति याज्ञे कर्मणि स नियमः । एवं हि श्रूयते । यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परापरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः । ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते याज्ञे पुनः कर्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितं ततस्ते पराभूताः ॥९॥

### शब्दानां गुणसमुदायवृत्तिवादः २,२

अथवा सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति ।

तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति । समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । तद्यथा । पूर्वे पञ्चालाः । उत्तरे पञ्चालाः । तैलं भुक्तम् । घृतं भुक्तम् । शुक्लः नीलः कपिलः कृष्ण इति । एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते जातिहीने गुणहीने च ॥ गुणहीने तावत् । अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति । अब्राह्मणोऽयं यो गच्छन् भक्षयति ॥

जातिहीने संदेहाद्दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते। संदेहात्तावत्। गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति। ततः पश्चादुपलभते नायं ब्राह्मणोऽब्राह्मणोऽयमिति। तत्र संदेहाच्च ब्राह्मणशब्दो वर्तते जातिकृता चार्थस्य निवृत्तिः दुरुपदेशात्। दुरुपदिष्टमस्य भवत्यमुष्मिन्नवकाशे ब्राह्मणस्तमानयेति। स तत्र गत्वा यं पश्यति तमध्यवस्यति ब्राह्मणोऽयमिति। ततः पश्चादुपलभते नायं ब्राह्मणोऽब्राह्मणोऽयमिति। तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते जातिकृता चार्थस्य निवृत्तिः। आतश्च संदेहाद्दुरुपदेशाद्वा न ह्ययं कालं मापराशिवर्णमापण आसीनं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति! निर्ज्ञातं तस्य भवति॥६॥

[ ४ ]

## वाक्यपदीयम् (भर्तृहरिविरचितम्)

### व्याकरणशरीर-प्रतिपादनम् १

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः॥२४॥**

**कार्यकारणभावेन योग्यभावेन च स्थिताः।**
**धर्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु॥२५॥**

**ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः।**
**स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्॥२६॥**

[a]त्रिष्वप्येषु श्लोकेषु प्रस्तुतस्य परिसमाप्तिः। तत्रापोद्धारपदार्थो नामात्यन्तसंसृष्टः संसर्गादनुमेयेन परिकल्पितेन रूपेण प्रकृतप्रविवेकः सन्नपोद्ध्रियते। प्रविविक्तस्य हि तस्य वस्तुनो व्यवहारातीतं रूपम्। तत्तु स्वप्रत्ययानुकारेण यथागमं भावनाभ्यासवशादुत्प्रेक्षया प्रायेण व्यवस्थाप्यते। तथैव चाप्रविभागे शब्दात्मनि कार्यार्थमन्वयव्यतिरेकाभ्यां

---

[a]) वृषभदेवटीकासारः।

रूपसमनुगमकल्पनया समुदायादपोद्धृतानां शब्दानामभिधेयत्वेनाश्रीयते। सोऽयमपोद्धारपदार्थः शास्त्रव्यवहारमनुपतति, शास्त्रव्यवहारसदृशं च लौकिकं भेदव्यवहारम्। स चैकपदनिबन्धनः सत्यासत्यभावेनानुपाख्येयः। वृक्षः प्लक्ष इत्यनुपसंहृते हि क्रियापदे शब्दोपग्रहाणामर्थात्मनां निरूपणं न विद्यते। यावच्चापवादभूताः क्रियाविशेषाः शब्दप्रवृत्तिकारणमस्तित्वं न निवर्तयन्ति तावदस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि वृक्षादिभिः पदैराक्षिप्तः प्रतीयते। तानि चैकपदसरूपाण्याक्षिप्तक्रियापदानि वाक्यानीति व्याख्यायन्ते। तथा पूर्वपदार्थ उत्तरपदार्थोऽन्यपदार्थः प्रातिपदिकार्थो धात्वर्थः प्रत्ययार्थ इत्येकपदवाच्योऽप्यनियतावधिर्बहुधा प्रविभज्य कैश्चित् कथं चिदपोद्ध्रियते।

स्थितलक्षणस्तु वाक्यरूपोपग्रहः कल्पितोद्देशविभागो विशिष्ट एकः क्रियात्माऽविच्छिन्नपदार्थग्रहणोपायप्रतिपाद्यः सत्यामपि विच्छेद-प्रतिपत्तौ नमस्यति, संग्रामयते, मुण्डयति, कुट्टयति चर्वयतीत्येव-मादिभिरविशिष्टः प्रतिभोपसंहारकाले। यदुक्तम्—'न वा पदस्यार्थे प्रयोगाद्' इति। उपसंहृतक्रियमत्र पदमाश्रीयते। संप्रत्ययानुगममात्रं वा परिगृह्यते। तथा हि पदस्यार्थे प्रयोगमभ्युपगम्य पुनरप्याह—'कृत्तद्धितान्तं चैव ह्यर्थवन्न केवलाः कृत्तद्धिताः' इति। अन्वाख्येयाश्च ये शब्दाः। केषां चित्पदावधिकमन्वाख्यानं, वाक्यावधिकमेकेषाम्। तत्र पदावधिकेऽन्वाख्याने श्रुत्यभेदादेकपदरूपोपग्रहे सामान्यमात्रे लब्धसंस्काराणि पदानि पदान्तरसम्बन्धप्राप्तसंनिधानेष्वर्थेषु संनिपतितेष्वपि विशेषेषु सामान्ये प्रतिलब्धमन्तरङ्गं संस्कारमुपादायैव प्रवर्तेरन्। तत्रैकवचनान्तो नपुंसकलिङ्गश्च शुक्लशब्दो भिन्नलिङ्गसंख्यैराश्रयैः सम्बद्धः श्रूयेत। तदर्थं 'विशेषणानां चाजातेः', इत्यनेन योगेन भाविन्याश्रये बहिरङ्गे प्रक्रान्ते गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनान्यनुगम्यन्ते। वाक्या-

वधिके त्वन्वाख्याने नित्यसंसृष्टस्य गुणस्याश्रयविशेषेणात्यन्तमविवेका-त्सर्वतो व्यवच्छेदे सामान्यार्थत्वमेव न विद्यते। तत्र चेदमुक्तम्—'स्वाभाविकमेतद्' इति तथा प्रत्यवयवं द्वन्द्वपदसंस्कारे 'द्वन्द्वेऽबहुषु लुग्वचनमु'पन्यस्तम्। समुदायसंस्कारप्रक्रमे तु 'न वा सर्वेषां द्वन्द्वे बह्वर्थत्वाद्' इत्याह। तथा 'विशेषणं विशेष्येण बहुलम्, उपमानानि सामान्यवचनैः' इत्यादि सर्वं पदावधिक एवान्वाख्याने परिगृह्यते। पदस्य चान्वाख्येयत्वमभ्युपगम्य भू भूति भू अति इत्येवमादयः शब्दान्तरसमुदायप्रतिपत्तिहेतवः परिकल्पिताः प्रतिपादकाः शब्दा उपादीयन्ते।

कार्यकारणभावेनार्थाकारनिर्भासमात्रानुगतस्य प्रत्ययस्यार्थेषु प्रत्यस्त-रूपस्यार्थत्वेनाध्यवसाये तस्यार्थात्मनः शब्दो निमित्तम्। तथाऽर्थावग्रहदर्शनं सोऽयमिति शब्दार्थयोः सम्बन्धप्रसिद्धेर्नादाभिव्यक्तस्यान्तःकरणसंनिवेशिनः शब्दस्य प्रवृत्तौ कारणम्। इन्द्रियविषयवत् तु प्रकाश्यप्रकाशकभावेन विशिष्टानां शब्दानां विशिष्टेष्वर्थेषु नित्यमकर्तृव्यापारसाध्यमव्यभिचारित-प्रसिद्धसाधुभावानां वाचकानां शब्दानां वाच्येषु योग्यत्वम्, अप्रसिद्ध-संबन्धानां प्रथमप्रतिपादने समयोपाधिकम्।

तत्र साधोर्यः सम्बन्धोऽर्थेन स ज्ञाने शास्त्रपूर्वके वा प्रयोगे धर्मा-भिव्यक्तौ अङ्गत्वं प्रतिपद्यते। विशिष्टप्रत्ययोत्पत्तौ च प्रत्यक्षपक्षेण व्यवस्थां प्रकल्पयति। अनुमानपक्षेण तु सम्बन्धिसम्बन्धादक्षिनिकोचादि-वदपभ्रंशाः प्रत्ययविशेषेष्वङ्गभावमुपगच्छन्ति।

'ते लिङ्गैश्च'। अपोद्धारे हि शास्त्रव्यवहारार्थं समुदायात् संसृष्टायाः कस्याश्चिदर्थमात्रायाः क्रियमाणे तं तमवधिं प्रति निमित्तत्वेनार्थानां पुरुषाधीनो विकल्पभेदः सम्भवति। कथमिदं विज्ञायते हेतुमत्यभिधेये णिज्भवति, आहोस्विद्धेतुमति यो धातुर्वर्तते इति वर्तमानादिति। तथा

'स्त्रियाम्' इति । किं स्त्र्यर्थाभिधाने टाबादयः, स्त्र्यर्थवृत्तेः प्रातिपदिकात्स्वार्थे वेति । तथा 'नञ्' इति किंप्रधानोऽयं समास इति । न ह्येते विकल्पा लौकिकाः । समुदायार्थे हि लौकिके व्यभिचाराभावात् । पुरुषविकल्पेष्वनियतेषु यथा शास्त्रव्यवस्थाभेदो न भवति स विकल्पः परिगृह्यते । तथैकत्वादयो विभक्त्यर्थाः कर्मादयः, पञ्चकः प्रातिपादकार्थश्चतुष्कस्त्रिक इति पुरुषविकल्पाधीन एवंप्रकारः पक्षभेदः । क्रियासाधनकालादयोऽपि कैश्चित्कथंचिदभिधेयत्वेन प्रविभक्ताः । 'धातुः साधने दिशि पुरुषे चिति च तदाख्यातम् । लिङ्गं किमिति विभक्तौ एतन्नाम' । भावकर्मभ्यामात्मनेपदं, कर्तुः परस्मैपदम् इत्यपोद्धारपरिकल्पनाव्यवस्थामाश्रित्य 'स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतमि'ति प्रतिपत्तिक्रमनियमानुगममात्रं क्रियते । न हि शब्दस्य क्रमवती विरम्य विरम्य स्वार्थादिषु वृत्तिः संभवति । सकृदुच्चारणात् । अर्थेन च नित्यमवियोगात् । प्रतिपत्तिक्रमो ह्ययं श्रोतुरभिधातुर्वा न व्यवस्थितः । सर्वविशेषणविशिष्टं हि वस्तु संसर्गिणीनां मात्राणां कलापं यौगपद्येनैकस्या बुद्धेर्विषयतामापन्नमुत्तरकालमिच्छन् बुद्ध्यन्तरैः प्रविभजते । प्रविभक्तस्यापि चानुसन्धानमन्तरेणार्थक्रियाविषया प्रतिभा नोत्पद्यत इति पुनः संसर्गरूपमेव प्रत्यवमृशति । योऽपि चाभिधाता श्रोता वा विभागेन मात्रासु प्रतिपत्तिं लभते तस्यापि प्रत्यासत्त्या महाविषयत्वेनाभिव्यक्तिनिमित्तोपव्यञ्जनप्रकर्षेणोपलिप्सया, बीजवृत्तिलाभानुगुण्येन वा ग्राह्यासु मात्रास्वनियमेन बुद्धिक्रमो व्यवतिष्ठते । तथा ह्याह—

एकोऽयं शक्तिभेदेन भावात्मा प्रविभज्यते ।
बुद्धिवृत्त्यनुकारेण बहुधा ज्ञानवादिभिः ॥१॥

स्थितलक्षणस्तु शास्त्रे पदार्थो वाक्यार्थो वा । तथा ह्युक्तम्—

'न वा पदस्यार्थे प्रयोगात् । यदत्राधिक्यं वाक्यार्थः सः' इति संग्रहेऽप्युक्तम्—

न हि किंचित् पदं नाम रूपेण नियतं क्वचित् ।
पदानां रूपमर्थो वा वाक्यार्थादेव जायते ॥२॥

अन्वाख्येयस्य खल्वपि पदस्वरूपस्य कृतेऽपि रूपपरिग्रहे प्रकृतिप्रत्ययादीनां विभागे रूपपरिग्रहानियमो दृश्यते मरुत्तेन्द्राण्यैकागारिकिगिरिशश्रोत्रियक्षत्रियादिषु वाक्यात्रधिकेऽन्वाख्याने । तदुक्तम्—

अर्थात् पदं साभिधेयं पदाद् वाक्यार्थनिर्णयः ।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥ इति ।

व्युत्पत्तौ वाक्यस्थं पदं वर्णसङ्घातजं पदमिति । कार्यकारणभावेन खल्वपि सम्बन्धो निदर्शितः । तद्यथा—'तेऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशाद् बुद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति' इति । योग्यभावेनापि सम्बन्ध उपवर्णितस्तत्र तत्र । 'अभिधानं पुनः स्वाभाविकम् । समाने वर्णे शोणकर्कहेमादीनामश्वविषयत्वं गवादिषु चाप्रवृत्तिः । तथेदमुक्तम्—'समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न' इत्येवमादि । तथाजातीयकाः खल्वप्याचार्य्येण स्वरिताञितः पठिताः, ये उभयवन्तः, येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति' । संग्रहकारः पठति—

शब्दार्थयोरसंभेदे व्यवहारे पृथक् क्रिया ।
यतः शब्दार्थयोस्तत्त्वमेकं तत् समवस्थितम् ॥ १ ॥

स एव पुनराह—

सम्बन्धस्य न कर्ताऽस्ति शब्दानां लोकवेदयोः ।
शब्दैरेव हि शब्दानां सम्बन्धः स्यात् कृतः कथम् ॥२॥

[ ५ ]

## बृहत्संहिता (वराहमिहिरकृता)

### ज्योतिर्विदादर्शः २

तत्र सांवत्सरोऽभिजातः प्रियदर्शनो विनीतवेषः सत्यवागनसूयकः समः सुसंहितोपचितगात्रसंधिरविकलश्चारुकरचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गो वपुष्मान् गम्भीरोदात्तघोषः। प्रायः शरीराकारानुवर्त्तिनो हि गुणा दोषाश्च भवन्ति ॥१॥

तत्र गुणाः। शुचिर्दक्षः प्रगल्भो वाग्मी प्रतिभानवान् देशकालवित् सात्त्विको न पर्षद्भीरुः सहाध्यायिभिरनभिभवनीयः कुशलोऽव्यसनी शान्तिकपौष्टिकाभिचारस्नानविद्याभिज्ञो विबुधार्चनव्रतोपवासनिरतः स्वतन्त्राश्चर्योत्पादितप्रभावः पृष्टाभिधाय्यन्यत्र दैवात्ययात्। ग्रहगणितसंहिताहोराग्रन्थार्थवेत्तेति ॥२॥

तत्र ग्रहगणिते पौलिशरोमकवासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु युगवर्षायनर्तुमासपक्षाहोरात्रयाममुहूर्तनाडीप्राणत्रुटित्रुटयाद्यवयवादिकस्य कालस्य क्षेत्रस्य च वेत्ता ॥३॥

चतुर्णां च मानानां सौरसावननाक्षत्रचान्द्राणामधिमासकावमसम्भवस्य च कारणाभिज्ञः ॥४॥

षष्ट्यब्दयुगवर्षमासदिनहोराधिपतीनां प्रतिपत्तिच्छेदवित् ॥५॥
सौरादीनां च मानानामसदृशसदृशयोग्यायोग्यत्वप्रतिपादनपटुः ॥६॥

सिद्धान्तभेदेऽप्ययननिवृत्तौ प्रत्यक्षसममण्डललेखासम्प्रयोगाभ्युदितांशकानां छायाजलयन्त्रदृग्गणितसाम्येन प्रतिपादनकुशलः ॥७॥

सूर्यादीनां च ग्रहाणां शीघ्रमन्दयाम्योत्तरनीचोच्चगतिकारणाभिज्ञः ॥८॥

सूर्याचन्द्रमसोश्च ग्रहणे ग्रहणादिमोक्षकालदिक्प्रमाणस्थितिविमर्द-वर्णादेशानामनागतग्रहसमागमयुद्धानामादेष्टा ॥९॥

प्रत्येकग्रहभ्रमणयोजनकक्ष्याप्रमाणप्रातिविषययोजनपरिच्छेद-कुशलः ॥१०॥

भूभगणभ्रमणसंस्थानाद्यक्षावलम्बकाहर्व्यासचरदलकालराश्युदयच्छा-यानाडीकरणप्रभृतिषु क्षेत्रकालकरणेष्वभिज्ञः ॥११॥

नानाचोद्यप्रश्नभेदोपलब्धिजनितवाक्सारो निकषसन्तापाभिनिवेशैः कनकस्येवाधिकतरममलीकृतस्य शास्त्रस्य वक्ता तन्त्रज्ञो भवति ॥१२॥

---

# उपवेदाः

## [ १ ]

## अर्थशास्त्रम् (कौटिल्यकृतम्)

### शिक्षाग्रहणम् १,५

विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः। कृतकः स्वाभाविकश्च विनयः। क्रिया हि द्रव्यं विनयति नाद्रव्यम्। शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्।

विद्यानां तु यथा स्वमाचार्यप्रामाण्याद्विनयो नियमश्च। वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत।

वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः।

ब्रह्मचर्यं चाऽऽषोडशाद् वर्षात्। अतो गोदानं दारकर्म च। अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद्विनयस्य।

पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत्। पश्चिममितिहासश्रवणे। पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः। शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात्। अगृहीतानामाभीक्ष्ण्यश्रवणं च। श्रुताद्धि प्रज्ञोपजायते प्रज्ञया योगो योगादात्मवत्तेति विद्यासामर्थ्यम् ॥२॥

### इन्द्रियजयः १,६

विद्याविनयहेतुरिन्द्रियजयः। कामक्रोधलोभमानमदहर्षत्यागात् कार्यः। कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रति-

पत्तिरिन्द्रियजयः शास्त्रार्थानुष्ठानं वा कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः। तद्विरुद्धवृत्तिरवश्येन्द्रियश्चातुरन्तोऽपि राजा सद्यो विनश्यति। यथा दाण्डक्यो नाम भोजः कामाद् ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश। करालश्च वैदेहः। कोपाज्जनमेजयो ब्राह्मणेषु विक्रान्तः। तालजंघश्च भृगुषु। लोभादैलश्चातुर्वर्ण्यमत्याहारयमाणः। सौवीरश्चाजविन्दुः। मानाद्रावणः परदारानप्रयच्छन्, दुर्योधनो राज्यादंशं च। मदाड्डम्भोद्भवो भूतावमानी। हैहयश्चार्जुनः। हर्षाद्वातापिरगस्त्यामत्यासादयन्, वृष्णिसंघश्च द्वैपायनमिति।

एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः।
सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः॥

शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः।
अम्बरीषश्च नाभागो बुभुजाते चिरं महीम्॥

तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत। वृद्धसंयोगेन प्रज्ञां, चारेण चक्षुः, उत्थानेन योगक्षेमसाधनं, कार्यानुशासनेन स्वधर्मस्थापनं, विनयं विद्योपदेशेन, लोकप्रियत्वमर्थसंयोगेन, हितेन वृत्तिम्। एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत्। स्वप्नं लौल्यमनृतमुद्धतवेषत्वमनर्थसंयोगं च। अधर्मसंयुक्तमनर्थसंयुक्तं च व्यवहारम्। धर्मार्थाविरोधेन कामं सेवेत। न निःसुखस्स्यात्। समं वा त्रिवर्गमन्योन्यानुबन्धम्। एको ह्यत्यासेवितो धर्मार्थकामानात्मानमितरौ च पीडयति। 'अर्थ एव प्रधानः' इति कौटिल्यः—अर्थमूलौ हि धर्मकामाविति।

[ २ ]

## धनुर्वेदः (उशनसा कृतः)

### खड्ग-वर्णनम्

जमदग्निं प्रति शुक्रो भगवानुवाच । अथ प्रशस्तान् वर्णान् वक्ष्यामि निबोध । मुक्ताफलस्फटिकवर्णसदृशस्तरुणादित्यकिरणसप्रभो वैडूर्योत्पलवर्णः समुद्रसन्निभो नीलनीरदाभोऽभिनवेन्द्रनीलसच्छायो मयूरग्रीवावर्णो विमलाकाशसंकाशः कांस्यनीलसवर्णः सुवर्णरजतवर्णसंवादी महानीलमणिवर्णानुकारी चेति खड्गानां वर्णः प्रशस्तो भवेत् ।

निन्दिता वर्णा वक्ष्यन्ते । केशवर्णो मषीमलिनः सीससन्निभः समानश्च लोहवर्णेन मक्षिकापक्षधूमसन्निभवर्णो गृहधूमसवर्णो रूक्षः कल्माषो निष्प्रभश्चेति वर्णाः समासतो विगर्हिताः । तत्र केशवर्णाभः खड्गः क्लेशकरो भवति । मषीसवर्णो भयप्रदो भवति । सीसवर्णो भर्तुर्विनाशाय कुलविनाशाय च । लोहवर्णो मातुलस्य कुक्षिव्याधिकरो मक्षिकापक्षसवर्णो भयंकरस्तस्य च भोगविनाशाय । धूमसवर्णो वह्निभयं दद्यात् । गृहधूमसवर्णः कुलक्षयं करोति कल्माषो रुक्षो निष्प्रभश्च दौर्भाग्यायार्थनाशाय च कल्पते खड्ग इति वर्णाः शुभाशुभाः कथिताः ।

### अथ खड्गभेदाः

अतः परं खड्गनाम वक्ष्यते । क्रिया मरको मारो मार्गस्थोऽथ चित्रतालित इति पञ्चैते पञ्चैव सन्नाह्याः खड्गाः कनीयांसो वेदितव्याः । सुखसञ्चारः सुखसन्नाह्यो मध्यमोत्तमश्चेति पञ्च (?) मध्यमा खड्गा भवन्ति । दुर्धर्षो विजयः सुनन्दो नन्दनः श्रेष्ठः पञ्चोत्तमाः खड्गा भवन्ति । तेषां मध्ये द्वाविंशत्यङ्गुलः प्रथमः खड्गो भवति । ततः परेषां द्व्यङ्गुलादिवृद्धिरुत्तरोत्तरा भवति । तथा विंशतिपलिक आद्यः शेषाणा-

मष्टपला विवृद्धिः। पलानामयुग्मं वाङ्गुलानां न प्रशस्तं भवति। अग्रपृथुर्मूलपृथुः संक्षिप्तमध्यः समकायश्चेति खड्गाश्चतुर्विधा वेदितव्याः। पिण्डितः पत्र इति तेषां द्विविधः कायो भवति एकधारो द्विधारश्च। मुखानि तु द्वादश भवन्ति। शूलाग्रः शिखराग्रः सग्रामो मण्डलाग्रो गोजिह्वाग्रः पार्श्वाग्रोऽथ कुटिलाग्रः सहकारपत्राग्रो मण्डलाग्रोऽथ कुमुदाग्रः पद्मोत्पलपुष्पफलोपममुखोऽहिमुखाग्रो मुखान्येवमस्य खड्गस्य द्वादश भवन्ति। द्व्यङ्गुलोऽधमस्य विस्तारो मध्यमस्य चतुरङ्गुलो विस्तार उत्तमस्य षडङ्गुलो विस्तारो भवति॥

## कुन्त-लक्षणम्

उक्ता कुन्तोत्पत्तिरनन्तरं कुन्तद्रव्यं वक्ष्यते। वेणुवेत्रतालचन्दनशिंशपासनखदिरदेवदारुश्चेति कुन्तस्य दण्डद्रव्याणि। तत्र दण्डः सप्तहस्तप्रमाणः श्रेष्ठः षड्भिर्हस्तैर्मध्यमः पञ्चहस्तश्च निकृष्टो भवति। लोहस्याकारौ द्वौ भवतः एकं पुष्कलावर्तं द्वितीयं वीनोत्थितं चेति। तत्र वीनोत्थितं यल्लोहं तत् तीक्ष्णम्। यत्तु पुष्कलावर्तकं तल्लोहं मृदु। तयोस्त्वियं परीक्षा यत्ताडितं नदति तत् तीक्ष्णम्। यन्निःशब्दं तन्मृदु। निपाते च यद् भज्यते, तद् वीनोत्थितं तीक्ष्णम्। यन्नमति तत् पुष्कलावर्तं मृदु भवेत्। कुन्तस्य च फलं मृदुना लोहेन कर्तव्यं तीक्ष्णेन लोहेन धारा कार्या। तयोरलाभे शेषाणि लोहानि शोधयित्वा कुन्तफलं तैः कारयेत्। तच्च सप्तपर्णशाकखर्जूरीवेत्रकरवीरघेणुतालानाम्। केतक्यास्तु पत्राकारं कुशाग्रसन्निभं तथा कर्णसंस्थानं वा कर्तव्यम्। तच्च निर्व्रणं मनोदृष्टिहरं तीक्ष्णं शुभं च श्रेष्ठं च षोडशाङ्गुलायामं मध्यमं चतुर्दशाङ्गुलायाममधमं द्वादशाङ्गुलायामं भवति। त्र्यङ्गुलविस्तारं द्व्यङ्गुलविस्तारं च क्रमाद् भवति। द्वियवबाहुल्यं सार्धैकयवबाहुल्यमेकयवबाहुल्यं च॥

[ ३ ]

## चरकसंहिता (अग्निवेशकृता)

### स्वास्थ्यकरं सद्-वृत्तम् ८

तस्मादात्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्-वृत्तमनुष्ठेयम् ॥१७॥

तद्ध्यनुतिष्ठन् युगपत् संपादयत्यर्थद्वयम्—आरोग्यामिन्द्रिय-विजयञ्चेति, तत्सद्वृत्तमखिलेनोपदेक्ष्यामोऽग्निवेश ! तद्यथा—देवगो-ब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेत् । ओषधीः प्रशस्ता धारयेत्, द्वौ कालावुपस्पृशेत्, मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात् । त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत् । नित्यमनुपहतवासाः सुमनाः सुगन्धिः स्यात्, साधुवेशः, प्रसाधितकेशः मूर्धश्रोत्रघ्राणपादतैलनित्यो, धूमपः, पूर्वाभिभाषी, सुमुखो, दुर्गेष्वभ्युपपत्ता, होता, यष्टा, दाता, चतुष्पथानां नमस्कर्ता, बलीनामुपहर्ता, अतिथीनां पूजकः, पितृभ्यः पिण्डदः, काले हितमितमधुरार्थवादी, वश्यात्मा, धर्मात्मा, हेतावीर्ष्युः, फले नेर्ष्युः निश्चिन्तो निर्भीकः, ह्रीमान्, धीमान्, महोत्साहः, दक्षः, क्षमावान्, धार्मिकः, आस्तिकः, विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्याणामुपा-सिता, छत्री, दण्डी, मौली, सोपानत्को युगमात्रदृगनुचरेत्, मङ्गला-चारशीलः, कुचेलास्थिकण्टकामेध्यकेशतुषोत्करभस्मकपालस्नानभूमीनां परिहर्ता, प्राक् श्रमाद् व्यायामवर्जी स्यात्, सर्वप्राणिषु बन्धुभूतः स्यात् । क्रुद्धानामनुनेता, भीतानामाश्वासयिता, दीनानामभ्युपपत्ता, सत्यसंधः, शम-प्रधानः, परपरुषवचनसहिष्णुः, अमर्षघ्नः, रागद्वेषहेतूनां हन्ता ॥१८॥

नानृतं ब्रूयान्नान्यस्वमाददीत, नान्यस्त्रियमभिलषेन्नान्यश्रियं, न वैरं रोचयेन्न कुर्यात् पापं, न पापेऽपि पापी स्यान्नान्यदोषान् ब्रूयात्,

नान्यरहस्यमागमयेन्नाधार्मिकैर्न नरेन्द्रद्विष्टैः सहासीत नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः, न दुष्टयानान्यारोहेन्न जानुसमं कठिनमासनमध्यासीत, नाऽनास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत, न गिरिविषममस्तकेष्वनुचरेन्न द्रुममारोहेन्न जलोग्रवेगमवगाहेन्न कुलच्छायामुपासीत, नाग्न्युत्पातमभितश्चरेन्नोच्चैर्हसेन्न शब्दवन्तं मारुतं मुञ्चेन्नानावृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेन्न नासिकां कुष्णीयान्न दन्तान् विघट्टयेत्, न नखान् वादयेत्, नास्थीन्यभिहन्यात्, न भूमिं विलिखेत्, न छिन्द्यात् तृणम्, न लोष्टं मृद्नीयात्, न विगुणमङ्गैश्चेष्टेत, ज्योतींष्यनिष्टममेध्यमशस्तं च नाऽभिवीक्षेत। न हुंकुर्याच्छवम्। न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्, न क्षपास्वमरसदनचैत्यचत्वरचतुष्पथोपवनश्मशानाघातनान्यासेवेत। नैकः शून्यगृहं न चाटवीमनुप्रविशेत्, न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत। नोत्तमैर्विरुध्येत, नावरानुपासीत। न जिह्मं रोचयेन्नानार्यमाश्रयेन्न भयमुत्पादयेत्, न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत। नोर्ध्वजानुश्चिरं तिष्ठेत् न व्यालानुपसर्पेन्न दंष्ट्रिणो न विषाणिनः, पुरोवातातपावश्यायातिप्रवाताञ्जह्यात्, कलिं नारभेत। नासुनिभृतोऽग्निमुपासीत नोच्छिष्टो नाधः कृत्वा प्रतापयेत्, नाविगतक्लमो नानाप्लुतवदनो न नग्न उपस्पृशेत्, न स्नानशाट्या स्पृशेदुत्तमाङ्गम्, न केशाग्राण्यभिहन्यात्, नोपस्पृश्य ते एव वाससी बिभृयात्। नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्। न पूज्यमङ्गलान्यपसव्यं गच्छेन्नेतराण्यनुदक्षिणम् ॥१९॥

नारत्नपाणिर्नास्नातो नोपहतवासा नाऽजपित्वा नाऽहुत्वा देवताभ्यो नाऽनिरुप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो नोदङ्मुखो न

विमना नाभक्ताशिष्टाशुचिक्षुधितपरिचरो न पात्रीष्वमेध्यासु नाऽदेशे नाऽकाले नाकीर्णे नाऽदत्त्वाग्रमग्नये नाऽप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितं न कुत्सयन् न कुत्सितं न प्रतिकूलोपहितमन्नमाददीत । न पर्युषितमन्यत्र मांसहरितशुष्कशाकफलभक्ष्येभ्यः । नाऽशेषभुक् स्यादन्यत्र दधिमधुलवणसक्तुसलिलसर्पिर्भ्यः । न नक्तं दधि भुञ्जीत । न सक्तूनेकानश्नीयान्न निशि भुक्त्वा न बहून्न द्विर्नोदकान्तरितान्न छित्त्वा द्विजैर्भक्षयेत् ॥२०॥

नानृजुः क्षुयान्नाद्यान्न शयीत । न वेगितोऽन्यकार्यः स्यात् । न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविकावातवर्चोमूत्राण्युत्सृजेत् । न पन्थानमवमूत्रयेत्, न जनवति नान्नकाले न जपहोमाध्ययनबलिमङ्गलक्रियासु श्लेष्मसिंघाणकं मुञ्चेत् ॥२१॥

न स्त्रियमवजानीत नातिविश्रम्भयेन्न गुह्यमनुश्रावयेन्नाधिकुर्यात् । न रजस्वलां नातुरां नामेध्यां नाशस्तां नानिष्टरूपाचारोपचारां नादक्षां नादक्षिणां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं नायोनौ न चैत्यचत्वरचतुष्पथोपवनश्मशानाघातनसलिलौषधिद्विजगुरुसुरालयेषु न सन्ध्ययोर्नातिथिषु नाशुचिर्नाजग्धभेषजो नाप्रणीतसंकल्पो नानुपस्थितप्रहर्षो नाभुक्तवान्नात्यशितो न विषमस्थो न मूत्रोच्चारपीडितो न श्रमव्यायामोपवासक्लमाभिहतो नाऽरहसि व्यवायं गच्छेत् ॥२२॥

न सतो न गुरून् परिवदेन्नाशुचिरभिचारकर्मचैत्यपूज्यपूजाध्ययनमभिनिर्वर्तयेत् ॥२३॥

न विद्युत्स्वनार्तवीषु नाभ्युदितासु दिक्षु नाग्निसंप्लवे न भूमिकम्पे न महोत्सवे नोल्कापाते न महाग्रहोपगमने न नष्टचन्द्रायां तिथौ न सन्ध्ययोर्नामुखाद् गुरोर्नावपतितं नातिमात्रं न तान्तं न विस्वरं नानवस्थितपदं नातिद्रुतं न विलम्बितं नातिक्लीबं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यसेत् ॥२४॥

नातिसमयं जह्यात् । न नियमं भिन्द्यात् । न नक्तं नादेशे चरेत् । न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात् । न बालवृद्ध-लुब्धमूर्खक्लिष्टक्लीबैः सह सख्यं कुर्यात् । न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात् । न गुह्यं विवृणुयात् । न कंचिदवजानीयात् । नाहंमानी स्यात् । नादक्षो नादक्षिणो नासूयकः न ब्राह्मणान् परिवदेत् । न गवां दण्ड-मुद्यच्छेत् । न वृद्धान् न गुरून् न गणान्न नृपान् वाऽधिक्षिपेत् । न चातिब्रूयात् । न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् बहिःकुर्यात् ॥२५॥

नाधीरो नात्युच्छ्रितसत्वः स्यात् । नाभृतभृत्यो नाविश्रब्ध-स्वजनो नैकः सुखी न दुःखशीलाचारोपचारो न सर्वविश्रम्भी न सर्वा-भिशङ्की न सर्वकालविचारी ॥२६॥

न कार्यकालमतिपातयेत् । नापरीक्षितमभिनिविशेत् । नेन्द्रियवशगः स्यात् । न चञ्चलं मनोऽनुभ्रामयेत् । न बुद्धीन्द्रियाणामतिभारमा-दध्यात् । न चातिदीर्घसूत्री स्यात् । न क्रोधहर्षावनुविदध्यात् । न शोकमनुवसेत् । न सिद्धावुत्सेकं गच्छेन्नासिद्धौ दैन्यम् ॥२७॥

[ ४ ]

## सुश्रुतसंहिता

### जलायुका-वर्णनम् सूत्रस्थानम् १३

जलमासामायुरिति जलायुकाः, जलमासामोक इति जलौकसः ॥९॥

ता द्वादश, तासां सविषाः षट्, तावत्य एव निर्विषाः ॥१०॥

तत्र सविषाः—कृष्णा, कर्बुरा, अलगर्दा, इन्द्रायुधा, सामुद्रिका, गोचन्दना चेति । तासु अञ्जनचूर्णवर्णा पृथुशिराः कृष्णा, वर्मिमत्स्य-वदायता छिन्नोन्नतकुक्षिः कर्बुरा, रोमशा महापार्श्वा कृष्णमुख्यलगर्दा, इन्द्रायुधवदूर्ध्वराजिभिश्चित्रा इन्द्रायुधा, ईषदसितपीतिका विचित्रपुष्पा-

कृतिचित्रा सामुद्रिका, गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति, ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्दिर्मदः सदनमिति लिङ्गानि भवन्ति। तत्र महागदः पानलेपननस्य-कर्मादिषूपयोज्यः। इन्द्रायुधादष्टमसाध्यम्। इत्येताः सविषाः सचिकित्सिता व्याख्याताः ॥११॥

अथ निर्विषाः —कपिला, पिङ्गला शङ्कुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका चेति। तत्र, मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धा मुद्गवर्णा कपिला, किंचिद्रक्ता वृत्तकाया पिङ्गाऽऽशुगा च पिङ्गला, यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी, मूषिका-कृतिवर्णाऽनिष्टगन्धा च मूषिका, मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरी-कमुखी, स्निग्धा पद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे, इत्येता अविषा व्याख्याताः ॥१२॥

तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि, तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति ॥१३॥

तत्र, सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भस्सु च साविषाः; पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवलकोथजाता विमलेष्वम्भस्सु च निर्विषाः ॥१४॥

---

# स्मृतयः

## [ १ ]

## याज्ञवल्क्यस्मृतिः

(मिताक्षरा)

**अपुत्रस्य दायविभागः** २,८

मुख्यगौणसुता दायं गृह्णन्तीति निरूपितम्, तेषामभावे सर्वेषां दायादक्रम उच्यते—

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।**
**तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥ १३५ ॥**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥ १३६ ॥**

पूर्वोक्ता द्वादशपुत्रा यस्य न सन्ति असावपुत्रः तस्यापुत्रस्य स्वर्यातस्य परलोकं गतस्य धनभाक् धनग्राही एषां पत्न्यादीनामनुक्रान्तानां मध्ये पूर्वस्य पूर्वस्याभाव उत्तर उत्तरो धनभागिति संबन्धः। सर्वेषु मूर्धावसिक्तादिषु अनुलोमजेषु सूतादिषु प्रतिलोमजेषु वर्णेषु च ब्राह्मणादिषु अयं दायग्रहणविधिर्दायग्रहणक्रमो वेदितव्यः। तत्र प्रथमं पत्नी धनभाक्। पत्नी विवाहसंस्कृता 'पत्युर्नो यज्ञसंयोगे (पा ४,१,३३)' इति स्मरणात्। एकवचनं च जात्यभिप्रायेण। ताश्च बह्वयश्चेत्सजातीया विजातीयाश्च तदा यथांशं विभज्य धनं गृह्णन्ति। वृद्धमनुरपि पत्न्याः समग्रधनसंबन्धं वक्ति—'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥' इति। वृद्धविष्णुरपि—'अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामि, तदभावे पितृगामि तदभावे मातृगामि' इति। कात्यायनोऽपि—'पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी।

तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥' इति । तथा 'अपुत्रस्यार्यकुलजा पत्नी दुहितरोऽपि वा । तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः ॥' इति । बृहस्पतिरपि (२९,४८)—'कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु । असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥' एतद्विरुद्धानीव वाक्यानि लक्ष्यन्ते—'भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा । विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥ भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्यां भर्तुश्चेदाच्छिद्युरितरासु तु ॥' इति पत्नीसद्भावेऽपि भ्रातॄणां धनग्रहणं पत्नीनां च भरणमात्रं नारदेनोक्तम् (१३,२५-२६) । मनुना तु (९,१८५; २१७)—'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इत्यपुत्रस्य धनं पितुर्भ्रातुर्वेति दर्शितम् । तथा 'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥' इति मातुः पितामह्याश्च धनसम्बन्धो दर्शितः । शङ्खेनापि—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी' इति भ्रातॄणां पित्रोर्ज्येष्ठायाश्च पत्न्याः क्रमेण धनसम्बन्धो दर्शितः । कात्यायनेनापि—'विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् । भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥' इत्येवमादीनां विरुद्धार्थानां वाक्यानां योगीश्वरेण व्यवस्था दर्शिता 'पत्नी गृह्णीयात्' इत्येतद्वचनजातं विभक्तभ्रातृस्त्रीविषयम् । सा च यदि नियोगार्थिनी भवति, कुत एतत् नियोगसव्यपेक्षायाः पत्न्या धनग्रहणं न स्वतन्त्रायामिति । 'पिता हरेदपुत्रस्य (मनु ९,१८५)' इत्यादिवचनात्तत्र व्यवस्थाकारणं वक्तव्यम् । नान्यद् व्यवस्थाकारणमस्ति इति । गौतमवचनाच्च (२९.५,६) 'पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत' इति । अस्यार्थः—पिण्डगोत्रर्षिसम्बन्धा अनपत्यस्य रिक्थं

भजेरन् स्त्री वा रिक्थं भजेत् यदि बीजं लिप्सेतेति । मनुरपि (९,१४६; १२०) 'धनं यो बिभृयाद् भ्रातुर्मृतस्य स्त्रियमेव वा । सोऽपत्यं भ्रातुरुत्पाद्य दद्यात् तस्यैव तद्धनम् ॥' इति । अनेनैतद्दर्शयति विभक्तधनेऽपि भ्रातर्युपरतेऽपत्यद्वारेणैव पत्न्या धनसम्बन्धो नान्यथेति । यथाऽविभक्तधनेऽपि 'कनीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि । समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः ॥' इति । तथा वसिष्ठोऽपि (१७,४८) 'रिक्थलोभान्नास्ति नियोगः' इति रिक्थलोभान्नियोगं प्रतिषेधयन् नियोगद्वारक एव पत्न्या धनसम्बन्धो नान्यथेति दर्शयति । नियोगाभावेऽपि पत्न्या भरणमात्रमेव नारदवचनात् 'भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्' इति । योगीश्वरेणापि (२,१४२) किल वक्ष्यते 'अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥' इति । अपि च द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद्धनग्रहणमयुक्तम् । तथा च केनापि स्मृतम्—'यज्ञार्थे द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये । अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः ॥ यज्ञार्थं विहितं वित्तं तस्मात्तद् विनियोजयेत् । स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु ॥' इति । तदनुपपन्नम् । 'पत्नी दुहितरः' इत्यत्र नियोगस्याप्रतीतेरप्रस्तुतत्वाच्च । अपिचेदमत्र वक्तव्यम् । पत्न्या धनग्रहणे नियोगो वा निमित्तं तदुत्पन्नमपत्यं वा । तत्र नियोगस्यैव निमित्तत्वे अनुत्पादितपुत्राया अपि धनसंबन्धः प्राप्नोति । उत्पन्नस्य च पुत्रस्य धनसम्बन्धो न प्राप्नोति । अथ तदपत्यस्यैव निमित्तत्वं, तथा सति पुत्रस्यैव धनसंबन्धात् पत्नीति नारब्धव्यम् ॥

अथ स्त्रीणां पतिद्वारको धनसम्बन्धः पुत्रद्वारको वा नान्यथेति मतम् । तदप्यसत्—'अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् (मनु ९,१९४)॥' इत्यादि-

विरोधात् । किं च—सर्वथा पुत्राभावे 'पत्नी दुहितरः' इत्यारब्धम् । तत्र नियुक्ताया धनसम्बन्धं वदता क्षेत्रजस्यैव धनसम्बन्ध उक्तो भवति । स च प्रागेवाभिहित इति 'अपुत्रप्रकरणे पत्नी' ति नारब्धव्यम् । 'अथ पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन् स्त्री वाऽनपत्यस्य बीजं लिप्सेत (२९,५)' इति गौतमवचनान्नियुक्ताया धनसम्बन्ध इति । तदप्यसत् । नहि यदि बीजं लिप्सेत तदाऽनपत्यस्य स्त्री धनं गृह्णीयादित्ययमर्थोऽस्मात् प्रतीयते । किन्तु 'अनपत्यस्य धनं पिण्डगोत्रर्षिसंबन्धा भजेरन् स्त्री वा सा स्त्री बीजं वा लिप्सेत संयता वा भवेत्' इति तस्या धर्मान्तरोपदेशः 'वा' शब्दस्य पक्षान्तरवचनत्वेन यद्यर्थाप्रतीतेः । अपि च संयताया एव धनग्रहणं युक्तं, न नियुक्तायाः स्मृतिलोकनिन्दितायाः । 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता । पत्न्येव दद्यात् तत् पिण्डं कृत्स्नमंशं लभेत च ॥' इति संयताया एव धनग्रहणमुक्तम् ॥

तथा नियोगश्च निन्दितो मनुना (९,६४)—'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥' इत्यादिना । यत्तु वसिष्ठवचनम् (१७,६५) 'रिक्थलोभान्नास्ति नियोगः' इति तदविभक्ते संसृष्टिनि वा भर्तरि प्रेते तस्या धनसंबन्धो नास्तीति स्वापत्यस्य धनसंबन्धार्थं नियोगो न कर्तव्य इति व्याख्येयम् । यदपि नारदवचनम् (१३,२४;२६)—'भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्' इति, तदपि 'संसृष्टानां तु यो भागस्तेषामेव स इष्यते' इति संसृष्टानां प्रस्तुतत्वात्तत्स्त्रीणामनपत्यानां भरणमात्र-प्रतिपादनपरम् । न च 'भ्रातॄणामप्रजाः प्रेयाद्' इत्येतस्य संसृष्टिविषयत्वे 'संसृष्टानां तु यो भाग' इत्यनेन पौनरुक्त्यमाशङ्कनीयम् । यतः पूर्वोक्तिविवरणेन स्त्रीधनस्याविभाज्यत्वं तत्स्त्रीणां च भरणमात्रं विधीयते ।

यदपि 'अपुत्रा योषितश्चैषाम् ( २,१४० )' इत्यादिवचनं तत् क्लीबादि-स्त्रीविषयमिति वक्ष्यते ।

यत्तु 'द्विजातिधनस्य यज्ञार्थत्वात्स्त्रीणां च यज्ञेऽनधिकाराद् धन-ग्रहणमयुक्त'मिति, तदसत् । सर्वस्य द्रव्यजातस्य यज्ञार्थत्वे दानहोमा-द्यसिद्धेः । अथ यज्ञशब्दस्य धर्मोपलक्षणत्वाद् दानहोमादीनामपि धर्म-त्वात्तदर्थत्वमविरुद्धमिति मतम् । एवं तर्ह्यर्थकामयोर्धनसाध्ययोरसिद्धिरेव स्यात् । तथा सति 'धर्ममर्थं कामं यथाशक्ति न हापयेत् (१,११५)' तथा 'न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः (गौ ९,२४)' । तथा 'न तथैतानि शक्यन्ते च संनियन्तुमसेवया ( मनु २,१६)' इत्यादियाज्ञवल्क्यगौतममनुवचनविरोधः । अपि च धनस्य यज्ञार्थत्वे 'हिरण्यं धार्यम्' इति हिरण्यसाधारणस्य क्रत्वर्थतानिरा-करणेन पुरुषार्थत्वमुक्तं तत्प्रत्युद्धृतं स्यात् । किं च यज्ञशब्दस्य धर्मोप-लक्षणपरत्वे स्त्रीणामपि पूर्तधर्माधिकाराद्धनग्रहणं युक्ततरम् । यत्तु पार-तन्त्र्यवचनं 'न स्त्री स्वातन्त्र्यमर्हति ( मनु ९,३)' इत्यादि, तदस्तु पारतन्त्र्यं, धनस्वीकारे तु को विरोधः ॥ कथं तर्हि 'यज्ञार्थं द्रव्यमुत्पन्नम्' इत्यादि वचनम्, उच्यते—'यज्ञार्थमेवार्जितं यद्धनं तद्यज्ञ एव नियोक्तव्यं पुत्रादिभिरपी'त्येवंपरं तत् । 'यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत् ( १,१२७ )' इति दोषश्रवणस्य पुत्रादिष्वविशेषात् । यदपि कात्यायनेनोक्तम्—'अदायिकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम् । अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत् ॥' इति । अदायिकं दायाद-रहितं यद्धनं तद् राजगामि राज्ञो भवति, योषिद्भृत्यौर्ध्वदेहिक-मपास्य, तत्स्त्रीणामशनाच्छादनोपयुक्तमौर्ध्वदेहिकं धनिनः श्राद्धाद्युप-युक्तं चापरस्य परिहृत्य राजगामि भवतीति संबन्धः । अस्यापवाद उत्तरार्धे । श्रोत्रियद्रव्यं च योषिद्भृत्यौर्ध्वदेहिकमपास्य 'श्रोत्रियायोपपादये-

दिति, तदप्यवरुद्धस्त्रीविषयम्, योषिद्ग्रहणात्। नारदवचनं च(१३,५२)— 'अन्यत्र ब्राह्मणात्किन्तु राजा धर्मपरायणः। तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः॥' इत्यवरुद्धस्त्रीविषयमेव। स्त्रीशब्दग्रहणात्। इह तु पत्नीशब्दादूढायाः संयताया धनग्रहणमविरुद्धम्। तस्माद्विभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं गृह्णातीत्ययमर्थः सिद्धो भवति। विभागस्योक्तत्वात्संसृष्टिनां तु वक्ष्यमाणत्वात्। एतेनाल्पधनविषयत्वं श्रीकरादिभिरुक्तं निरस्तं वेदितव्यम्। तथा ह्यौरसेषु पुत्रेषु सत्स्वपि जीवद्विभागे अजीवद्विभागे च पत्न्याः पुत्रसमांशग्रहणमुक्तम्—'यदि कुर्यात् समानंशान् पत्न्यः कार्याः समांशिकाः (२, ११५)' इति। तथा—'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत्' इति च, तथासत्यपुत्रस्य स्वर्यातस्य धनं पत्नी भरणादतिरिक्तं न लभत इति व्यामोहमात्रम्।

[ २ ]

## पराशरस्मृतिः

(माधवीया)

### विवाहः २,१

तत्र मनुः (३,४)—

'गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्॥' इति।

याज्ञवल्क्योऽपि (१,३,५२-५३)—

'अविप्लुत-ब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।' इति।

लक्षण्यां बाह्याभ्यन्तरलक्षणयुक्ताम्। बाह्यानि लक्षणानि मनुना

दर्शितानि (३.१०)—

'अव्यङ्गाङ्गीं सौम्यनाम्नीं हंस-वारण-गामिनीम् ।
तनु-लोम-केश-दशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥' इति ।

वर्ज्यामाह स एव (३,८-९)—

'नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥' इति ।

कपिला रक्ततण्डुलवर्णा । पिङ्गला अग्निवर्णा । अन्त्येति म्लेच्छनाम्नी

विष्णुपुराणेऽपि (३,१०,१८-२२)—

'न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ॥
न घर्घरस्वरां क्षामां तथा काकस्वरां न च ।
नानिबन्धेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद् बुधः ॥
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ।
गण्डयोः कूपकौ यस्या हसन्त्यास्तां न चोद्वहेत् ॥
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ।
आपीन-हस्त-पादाञ्च न कन्यामुद्वहेद् बुधः ॥
न वामनां नातिदीर्घां नोद्वहेत् संगतभ्रुवम् ।
न वातिच्छिद्रदशनां न करालमुखीं नरः ॥' इति ।

आन्तराणि तु लक्षणान्याश्वलायनगृह्ये विहितानि—'दुर्विज्ञेयानि लक्षणान्यष्टौ पिण्डान् कृत्वा 'ऋतमग्रे प्रथमं यज्ञ ऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद् दृश्यतामि'ति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति क्षेत्राच्चेदुभयतः-

शस्याद् गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्, गोष्ठात् पशुमती, वेदिपुरीषाद् ब्रह्मवर्चस्विन्यविदासिनो ह्रदात् सर्वसम्पन्ना। देवनात् कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात्पतिघ्नी' इति । विप्रवाजिनी विविधं प्रकर्षेण व्रजतीति विप्रव्राजिनी स्वैरिणी इत्यर्थः । अनन्यपूर्विकामिति दानेनोपभोगेन वा पुरुषान्तरागृहीताम् । अनेन पुनर्भूर्व्यावर्त्यते । अत एव काश्यपः—

'सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ।
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रसवा च या ।
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ।'

बौधायनः—'वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदन्नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः, तां गृहीत्वा न प्रजां न धर्मं विन्देत्' इति । नारदोऽपि—

'कन्यैवाक्षतयोनिर्या पाणिग्रहणपूर्विका ।
पुनर्भूप्रतिमा ज्ञेया पुनः संस्कारकर्मणि ॥' इति ।

याज्ञवल्क्योऽपि (१,३,६७)—

'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' इति । कान्तां कमनीयामुद्वोढुर्मनोनयनानन्दकारिणीम् । अत एव आपस्तम्बः— 'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः' इति ।

असपिण्डामिति । समान एकः पिण्डो यस्याः सा सपिण्डा, न सपिण्डा असपिण्डा, ताम् । सपिण्डता च सप्तमपुरुषपर्य्यवसायिनी । तत्रैकः पिण्डदाता, त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः, त्रयो

लेपभाजः वृद्धप्रपितामहादयः । तथा च मत्स्यपुराणे—

'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥' इति ।

मार्कण्डेयोऽपि—

'पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसंबन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः ।
लेपसंबन्धिनश्चान्ये पितामहप्रपितामहात् ।
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः ।
इत्येष मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः ।' इति ।

एतदुक्तं भवति, सप्तानां पुरुषाणामेकपिण्डक्रियाऽनुप्रवेशः सापिण्ड्यहेतुः । तथा च, देवदत्तस्य स्वकीयैः पित्रादिभिः षड्भिः सह सापिण्ड्यम्, तथा पुत्रादिभिः षड्भिः सह सापिण्ड्यमिति । नन्वेवं सति भ्रातृपितृव्यादिभिः सह सापिण्ड्यं न स्यात्, परिगणितेष्वनन्तर्भावात् । मैवम् । उद्दिश्य-देवतैक्येन क्रियैक्यस्यात्र विवक्षितत्वात् । देवदत्तकर्तृकक्रियायां ये देवतात्वेनानुप्रविशन्ति, तेषां मध्ये यः कोऽपि भ्रातृपितृव्यकर्तृकक्रियायामप्यनुप्रविशतीत्यस्ति तैः सह सापिण्ड्यम् । एवं भार्य्याणामपि भर्तृकर्तृकपिण्डदानक्रियायां सहकर्तृत्वात् सापिण्ड्यमिति । तदिदं निर्वाप्यसापिण्ड्यम् ।

अपरे पुनरन्यथा सापिण्ड्यमाहुः । तथाहि । समान एकः पिण्डो देहावयवो येषां ते सपिण्डाः । तत्र, पुत्रस्य साक्षात् पितृदेहावयवान्वयेन पित्रा सह सापिण्ड्यम् । तथा, पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । साक्षान्मातृशरीरावयवान्वयेन मात्रा, मातामहादिभिरपि मातृद्वारेण तच्छरारीरावयवान्वयात् । तथा, पितृव्यपितृष्वस्रादिभिरपि

पितामहदेहावयवान्वयात् । तथा, मातृस्वसृमातुलादिभिः सह मातामह-देहान्वयात् । पत्न्या सह एकशरीरारम्भकतया पत्युः, एवं भ्रातृ-भार्य्याणामप्येकशरीरारम्भकैः स्व-स्वपतिभिः सहैकशरीरारम्भकत्वेन । एवं तत्र तत्र साक्षात् परंपरया वा एकशरीरावयवान्वयेन सापिण्डयं योजनीयम् ।

[ २ ]

## आपस्तम्बधर्मसूत्रम्

### आतिथ्यविधिः २,६,३-८,४

अग्निरिव ज्वलन्नतिथिरभ्यागच्छति। धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति। स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोऽतिथिर्भवति । तस्य पूजायां शान्तिः स्वर्गः पुष्टिश्च । तमभिमुखोऽभ्यागम्य यथावयः समेत्य तस्यासनमाहारयेत् । शक्तिविषये नाबहुपादमासनं भवतीत्येके । तस्य पादौ प्रक्षालयेत् । शूद्रमिथुनावित्येके । अन्यतरोऽभिषेचने स्यात् । तस्योदकमाहारयेन्मृन्मयेनेत्येके । नोदकमाहारयेदसमावृत्तोऽध्ययनात्संवृत्तिश्चात्राधिका । सान्त्वयित्वा तर्पयेत् रसैर्भक्ष्यैरद्भिरवराद्धर्येनेत्येव । आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति । अन्नसंस्कर्त्तारमाहूय व्रीहीन्यवान्वा तदर्थान् निर्वपेत् । उद्धृतान्यवेक्षेत इदं भूयो नेदमिति । भूय उद्धरेत्येव ब्रूयात् । द्विषन् द्विषतो वा नान्नमश्नीयात् दोषं दोषेण वा मीमांसमानस्य मीमांसितस्य वा । पाप्मानं हि स तस्य भक्षयतीति विज्ञायते । स एष प्राजापत्यः कुटुम्बिनो यज्ञः प्रततः, योऽतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यः यस्मिन् पच्यते सोऽन्वाहार्यपचनः । ऊर्जं पुष्टिं प्रजां

पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति । पयउपसेचन-मन्नमग्निष्टोमसंमितं सर्पिषा षोडश्युक्थ्यसंमितं मांसेन द्वादशाहसंमित-मुदकेन प्रजावृद्धिरायुषश्च । प्रिया अप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते । स यत्प्रातर्मध्यन्दिने सायमिति ददाति सवनान्येव तानि भवन्ति । यदनूत्तिष्ठत्युदवस्यत्येव तत् , यत्सान्त्वयति सा दक्षिणा प्रशस्ता, यत्संसाधयति ते विष्णुक्रमाः, यदुपावर्त्तते सोऽवभृथ इति ब्राह्मणम् । राजानं चेदतिथिरभ्यागच्छेत् श्रेयसीमस्मै पूजामात्मनः कारयेत् । आहिताग्निं चेदतिथिरभ्यागच्छेत् स्वयमेत्य ब्रूयात् , व्रात्य क्वावात्सीरिति व्रात्योदकमिति व्रात्य तर्पयंस्त्विति । पुराऽग्निहोत्रस्य होमादुपांशु जपेद् व्रात्य यथा ते मनस्तथास्त्विति व्रात्य यथा ते वशस्तथास्त्विति व्रात्य यथा ते प्रियं तथास्त्विति व्रात्य यथा तेऽतिकामस्तथा तेऽस्त्विति । यस्योद्धृतेष्वग्निषु अतिथिरभ्यागच्छेत् स्वयमेनमभ्युपेत्य ब्रूयाद् व्रात्यातिसृज होष्यामीति । अतिसृष्टेन होतव्यमनातिसृष्टश्चेज्जुहुयाद् दोषं ब्राह्मणमाह । एकरात्रं चेद-तिथिं वासयेत् पार्थिवाँल्लोकानभिजयति । द्वितीययाऽऽन्तरिक्ष्यां-स्तृतीयया दिव्यान् चतुर्थ्या परावतो लोकान् । अपरिमिताभिरपरिमितान् लोकानाभिजयतीति विज्ञायते । असमुदितश्चेदतिथिर्ब्रुवाण आगच्छेदासन-मुदकमन्नं श्रोत्रियाय ददामीत्येवं दद्यादेवमस्य समृद्धं भवति । येन कृताव-सथः स्यादतिथिर्न तं प्रत्युत्तिष्ठेत् प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः । शेषभोज्यतिथीनां स्यान्न रसान्गृहे भुञ्जीतानवशेषमातिथिभ्यः । नात्मार्थ-मभिरूपमन्नं पाचयेद् इति ।

---

# अलङ्कारशास्त्रम्

[ १ ]

## ध्वन्यालोकः (आनन्दवर्धनकृतः)

### कवीनां शक्तिबलेनौचित्यस्थापनम् ३

तथा हि—महाकवीनामप्युत्तमदेवताविषयकप्रसिद्धसंभोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतं ग्राम्यत्वेन न प्रतिभासते। यथा कुमारसंभवे—देवीसंभोगवर्णनम्। एवमादौ च विषये यथौचित्यत्यागः, तथा दर्शितमेवाग्रे। शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते। तथा हि—शक्तिरहितेन कविना एवंविधे विषये शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेन प्रतिभासते। नन्वस्मिन् पक्षे 'यो यः शस्त्रं बिभर्ति' इत्यादौ किमचारुत्वमप्रतीयमानमेवारोपयामः ?। तस्माद् गुणव्यतिरिक्तत्वे, गुणरूपत्वे च संघटनाया अन्यः कश्चिन्नियमहेतुर्वक्तव्य इत्युच्यते। तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः। तत्र वक्ता कविः, कविनिबद्धो वा कश्चित्। कविनिबद्धश्चापि रसभावरहितो रसभावसमन्वितो वा। रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा। कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पाः। वाच्यं च ध्वन्यात्मरसाङ्गं रसाभासाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्।

तत्र यदा कविरपगतरसभावो वक्ता, तदा रचनायाः कामचारः। यदाऽपि कविनिबद्धो वक्ता रसभावरहितस्तदा स एव। यदा तु कविः कविनिबद्धो वा वक्ता रसभावसमन्वितो, रसश्च प्रधानभूतत्वाद् ध्वन्यात्म-

भूतस्तदाऽपि नियमेनैव तत्रासमासामध्यमसमासे एव संघटने। करुण-विप्रलम्भशृङ्गारयोस्त्वसमासैव संघटना। कथमिति चेत्? उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यः, तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः। एवं च दीर्घसमासा संघटना समासानामनेकप्रकारसंभावनया कदाचिद् रसप्रतीतिं व्यवदधातीति तस्यां नात्यन्तमभिनिवेशः शोभते, विशेषतोऽभिनेयार्थे काव्ये, ततोऽन्यत्र च विशेषतः करुण-विप्रलम्भ-शृङ्गारयोः। तयोर्हि सुकुमारतरत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति। रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ, मध्यमसमासा संघटना, कदाचिद्धीरोद्धतनायकसंबन्धव्यापाराश्रयेण दीर्घसमासापि वा, तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा भवतीति सापि नात्यन्तं परिहार्या।

। सर्वासु च संघटनासु प्रसादाख्यो गुणो व्यापी। स हि सर्वरससाधारणः सर्वसंघटनासाधारणश्चेत्युक्तम। प्रसादातिक्रमे ह्यसमासाऽपि संघटना करुणविप्रलम्भशृंगारौ न व्यनक्ति। तदपरित्यागे च मध्यमसमासाऽपि प्रकाशयति।

तस्मात् सर्वत्र प्रसादोऽनुसर्तव्यः। अत एव 'यो यः शस्त्रं बिभर्ति' इत्यादौ यद्योजसः स्थितिर्नेष्यते तत् प्रसादाख्य एव गुणो न माधुर्यम्। न चाचारुत्वम्, अभिप्रेतरसप्रकाशनात्। तस्माद् गुणाव्यतिरिक्तत्वे गुणव्यतिरिक्तत्वे वा सङ्घटनाया यथोक्तादौचित्याद्विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम्। तस्याश्च रसाभिव्यक्तिनिमित्तभूताया योऽयमनन्तरोक्तो नियमहेतुः, स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानमप्यविरुद्धम्।

[ २ ]

## काव्यमीमांसा ( राजशेखरविरचिता )

### कवीनां राजसभायामवस्थानम् १०

राजा कविः कविसमाजं विदधीत। राजनि कवौ सर्वो लोकः कविः स्यात्। स काव्यपरीक्षायै सभां कारयेत्। सा षोडशभिः स्तम्भैश्चतुर्भिर्द्वारैरष्टभिर्मत्तवारणीभिरुपेता स्यात्। तदनुलग्नं राज्ञः केलिगृहम्। मध्येसभं चतुःस्तम्भान्तरा हस्तमात्रोत्सेधा समणिभूमिका वेदिका। तस्यां राजासनम्। तस्य चोत्तरतः संस्कृताः कवयो निविशेरन्। बहुभाषाकवित्वे यो यत्राधिकं प्रवीणः स तेन व्यपदिश्यते।

यस्त्वनेकत्र प्रवीणः स सङ्क्रम्य तत्र तत्रोपविशेत्। ततः परं वेदविद्याविदः प्रामाणिकाः पौराणिकाः स्मार्त्ता भिषजो मौहूर्त्तिका अन्येऽपि तथाविधाः। पूर्वेण प्राकृताः कवयः; ततः परं नटनर्त्तकगायनवादनवाग्जीवनकुशीलवतालावचरा अन्येऽपि तथाविधाः। पश्चिमेनापभ्रंशिनः कवयः, ततः परं चित्रलेप्यकृतो माणिक्यबन्धका वैकटिकाः स्वर्णकारवर्द्धकिलोहकारा अन्येऽपि तथाविधाः। दक्षिणतो भूतभाषाकवयः, ततः परं भुजङ्गगणिकाः प्लवकशौभिकजम्भकमल्लाः शस्त्रोपजीविनोऽन्येऽपि तथाविधाः।

तत्र यथासुखमासीनः काव्यगोष्ठीं प्रवर्त्तयेत् भावयेत्परीक्षेत च। वासुदेवसातवाहनशूद्रकसाहसाङ्कादीन् सकलान् सभापतीन् दानमानाभ्यामनुकुर्यात्। तुष्टपुष्टाश्चास्य सभ्या भवेयुः, स्थाने च पारितोषिकं लभेरन्। लोकोत्तरस्य काव्यस्य च यथार्हा पूजा कवेर्वा। अन्तरान्तरा च काव्यगोष्ठीं शास्त्रवादाननुजानीयात्। मध्वपि

नानवद्यं स्वदते । काव्यशास्त्रविरतौ विज्ञानिष्वभिरमेत । देशान्तरागतानां च विदुषामन (?न्य) द्वारा सङ्गं कारयेदौचित्याद् यावत्स्थितिं पूजां च । वृत्तिकामांश्चोपजपेत् सङ्गृह्णीयाच्च । पुरुषरत्नानामेक एव राजोदन्वान्भाजनम् । राजचरितं च राजोपजीविनोऽप्यनुकुर्युः । राज्ञ एव ह्यसावुपकारो यद्राजोपजीविनां संस्कारः ।

महानगरेषु च काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाः कारयेत् । तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्च । श्रूयते चोज्जयिन्यां काव्यकारपरीक्षा—

'इह कालिदासमेण्ठावत्रामररूपसूरभारवयः ।
हरिश्चन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम् ॥'

श्रूयते च पाटलीपुत्रे शास्त्रकारपरीक्षा—

अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः ।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ॥

[ ३ ]

## काव्यप्रकाशः (मम्मटकृतः)

### काव्यरसास्वादः                                                    ४

उक्तं हि भरतेन—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । एतद् विवृण्वते—विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः स्थायी रत्यादिको भावो जनितोऽनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसंधानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः ।

राम एवायमयमेव राम इति, न रामोऽयमित्यौत्तरकालिके बाधे

रामोऽयमिति, रामः स्याद्वा नवाऽयमिति, रामसदृशोऽयमिति च सम्यङ्-मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसश्शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥

दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभादिशब्दव्यपदेश्यैः संयोगात् गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन सम्भाव्यमानो रत्यादिको भावस्तत्रासन्नपि सामाजिकानां चर्व्यमाणो रस इति श्रीशङ्कुकः ।

न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते, अपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते इति भट्टनायकः ।

लोके प्रमदादिभिः कारणादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते, न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति संबन्धिविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः

स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृतावशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधत् ब्रह्मानन्दास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः। स च न कार्यः, विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्। नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवात्। अपितु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न क्वचिद्दृष्टमिति अलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिपरिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्ययोऽप्यभिधीयताम्। तद्ग्राहकं च प्रमाणं न निर्विकल्पकम्, विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकम्, चर्व्यमाणस्यालौकिकानन्दमयस्य तस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्य चोभयात्मकत्वमिति पूर्ववल्लोकोत्तरतामवगमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः।

[ ४ ]

## रसगङ्गाधरः (जगन्नाथविरचितः)

### विशेषणपदानामन्वयशोधनम् २

**काव्यं सुधा रसज्ञानां कामिनां कामिनी सुधा।**
**धनं सुधा सलोभानां शान्तिः संन्यासिनां सुधा॥**

अत्र विषयमालाकृतो न कश्चिच्चमत्कारविशेष इति न पृथग्भेद-

गणनायां गण्यते। आरोप्यमाणमाला तु चमत्कारविशेषशालित्वाद्गण्यत एव।

अथ कथं नाम श्लिष्टपरम्परिते 'कमलावासकासारः' इत्यादावेकस्यारोपस्यारोपान्तरोपायत्वम्। यतः श्लेषेण कमलानामावासस्य कमलाया वासस्य चाभेदमात्रमत्र प्रतीयते, नैकत्रान्यारोपः। तस्य स्वतन्त्रविषयनिर्देशापेक्षत्वात्।

न च शुद्धाभेदप्रत्यय एवारोपः। विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात्। न च शुद्धाभेदप्रत्ययेनात्रार्थः। यत्सम्बन्धिनि यत्सम्बन्ध्यभेदस्तस्मिंस्तदभेद इति 'कमलावासकासारः' इत्यादौ राजनि कासारारोपो राजसम्बन्धिनि लक्ष्म्याश्रयत्वे कासारसम्बन्धिसरोजाश्रयत्वाभेदारोपेण समर्थयितुं शक्यः। श्लेषेण तु पुनर्लक्ष्म्याश्रयत्वसरोजाश्रयत्वयोरभिन्नत्वेन प्रत्ययादभिन्नधर्मनिबन्धनो राजकासारयोरप्यभेदप्रत्ययः स्यात्, नतु राजनि विषये कासारविषयकस्यारोपस्य प्रकृतस्य सिद्धिः। इमावभिन्नावित्याद्याकारस्य शुद्धाभेदप्रत्ययस्याप्रकृतत्वात्प्रागुक्त आरोपो मृग्यः। स च न श्लेषसाध्य इति। सत्यम्। श्लेषेण शुद्धाभेदप्रतीतौ सत्यां प्रकृतारोपसमर्थनायान्तरा मानसस्य राजसंबन्धिनि कासारसम्बन्ध्यभेदारोपस्य कल्पनान्नानुपपत्तिः।

कथं तर्हि परम्परितरूपके 'सौजन्यचन्द्रिकाचन्द्रो राजा' इत्यादौ रूपकत्वम्, अभेदारोपस्य सत्त्वेऽपि तस्य सादृश्यमूलकत्वाभावादिति चेत्, न। समर्थकारोपेण धर्मैक्यसम्पादने सादृश्यस्य निष्प्रत्यूहत्वात्। स्यादेतत्। सौजन्यचन्द्रिकाचन्द्र इत्यत्र तत्पुरुषावयवे समानाधिकरणतत्पुरुषे चन्द्रिकायामभेदसंसर्गेण सौजन्यस्य विशेषणत्वात्प्रतीयमानश्चान्द्रिकागतः सौजन्याभेदो न राजनि चन्द्राभेदात्मकं रूपकं समर्थयितुं प्रभवति, यत्सम्बन्धिनि यत्सम्बन्ध्यभेद इत्यादिप्रागुक्तन्यायात्। अपि तु सौजन्ये विषये

चन्द्रिकाभेदः। यथा—'सौजन्यं ते धराधीश! चन्द्रिका त्वं सुधानिधिः।' स च दुरुपपाद एव। न चानयोः समानवित्तिवेद्यत्वान्नानुपपत्तिरिति शक्यं वक्तुम्, प्रात्यक्षिके हि सामग्र्यास्तुल्यत्वात्तत् न तु शाब्दबोधे व्युत्पत्तिवैचित्र्यनियन्त्रिते। एवमन्यत्रापि कथं समासगतशुद्धपरम्परिते द्वयोरारोपयोर्निर्वाह्यनिर्वाहकभावः? कथं च शशिपुण्डरीकमित्यादौ पुण्डरीकरूपकमुच्यते? पुण्डरीकाभेदात्मकस्य पुण्डरीकताद्रूप्यस्याभानात्। शश्यभेदप्रत्ययाच्च पुण्डरीकं शशीत्यत्रेव शशिरूपकमुच्यताम्। एवं नीलिमदिव्यतोये तारावलीमुकुलमण्डलमण्डिते षोडशकलादलमङ्कभृङ्गमित्यत्राप्युत्तरपदार्थे पूर्वपदार्थभेदस्यैव भानात्पूर्वपदार्थरूपकापत्तिः।

तथा—'सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र सन्देहः॥'

इत्यत्र सुन्दर्यां विषयभूतायां राकातादात्म्यावगमात् स्फुटमेव तावद्राकारूपकम्। तत्र चरणत्रयगतानि रूपकाणि राकारूपकानुगुणतयोपात्तान्यपि नानुगुण्यमाचरन्ति। ताराचन्द्रिकापूर्णचन्द्राणां मौक्तिकधवलांशुकवदनाभिन्नत्वे सिद्धेऽपि न सुन्दर्यां राकाताद्रूप्यं रोद्धुमीष्टे, प्रत्युत विपरीतं राकायां सुन्दरीताद्रूप्यं, तेषां राकासम्बन्धित्वात् सर्वमेव व्याकुलमिति।

अत्र वदन्ति—अभेदस्तावद्विशेषणस्य संसर्गो भवति। स च यथा मुखं चन्द्र इत्यादौ वाक्यगते रूपके स्वप्रतियोगिनश्चन्द्रस्य स्वानुयोगिनि मुखे विशेषणताया निर्वाहकस्तथैव समासगते मुखचन्द्र इत्यादौ रूपके स्वानुयोगिनो मुखस्य स्वप्रतियोगिनि चन्द्रे विशेषणतायाः। एवं चोभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः। क्वचिदनुयोगित्वमुखः, क्वचिच्च प्रतियोगित्वमुखः, विशेषण-

विशेष्यभाववैचित्र्यात् । न तु मुखचन्द्र इत्यत्र मुखाभेदः संसर्गः । तथा सति चन्द्ररूपकानापत्तेः मुखरूपकापत्तेश्च । स्वप्रतियोगिकाभेद एव विशेषण-संसर्गो न तु स्वानुयोगिकाभेद इति तु दुराग्रहः । एवं च सौजन्य-चन्द्रिकेत्यादौ वस्तुतस्सौजन्याभेदो न सौजन्यस्य चन्द्रिकाविशेषणस्य संसर्गः, अपि तु चन्द्रिकाभेद एव । तथा च सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिकेति पर्यवसितेऽर्थे, भङ्ग्यन्तरेण सौजन्ये चन्द्रिकाभेदसिद्धौ जातायां राजनि चन्द्रभेदोऽपि निष्पद्यत इति परम्परिते नानुपपत्तिः । शशि-पुण्डरीकमित्यादावपि शशिनिष्ठाभेदप्रतियोगिपुण्डरीकमिति पर्यवसि-तेऽर्थे पुण्डरीकाभेदस्य भानात्पुण्डरीकरूपकमव्याहतम् । एवमन्येष्व-प्यवयवरूपकेषु बोध्यम्, एवं 'सुविमलमौक्तिकतारे' इत्यादावपि ताराद्यभेद एव मौक्तिकादिगतो मौक्तिकादीनां तारादिविशेषणानां संसर्गो भवन् राकारूपकस्य समर्थको भवतीति सर्वं सुस्थम् । सोयमभेदो यत्रानु-योगित्वमुखस्तत्र रूपकस्य विधेयता । यत्र च प्रतियोगित्वमुखस्तत्रा-नुवाद्यत्वमिति दिक् । तत्र 'प्राची सन्ध्या समुद्यन्महिमदिनमणेः' इत्यत्रारोप्यमाणयोः परस्परमारोपविषययोश्चानुकूल्ये रूपकयोरनु-ग्राह्यानुग्राहकभावो दर्शितः ।

---

# दर्शनानि

[ १ ]

## पूर्वमीमांसादर्शनम् ( जैमिनिकृतम् )

( शाबरभाष्यम् )

### यज्ञे मन्त्रा विवक्षितार्था वा न वा १.२

अथेदानीं किं विवक्षितवचना मन्त्रा उताविवक्षितवचनाः ? किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उतोच्चारणमात्रेण ? इति । यद्युच्चारणमात्रेण, तदा न नियोगतो, बर्हिर्देवसदनन्दामीत्येष बर्हिर्लवने विनियुज्येत । अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपकर्त्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवन एव विनियुज्येत इति । तदेवमवगच्छामः । उच्चारणमात्रेणैवोपकुर्वन्तीति । कुतः ? तदर्थशास्त्रात्—यदभिधानसमर्थो मन्त्रस्तत्रैनं शास्त्रं निबध्नाति । उरुप्रथा 'उरु प्रथस्व' इति पुरोडाशं प्रथयतीति वचनमिदमनर्थकं, यद्यर्थाभिधानेनोपकुर्वन्ति । अथोच्चारणमात्रेण, ततो वक्तव्यो विनियोग उक्तश्च । अतो नाऽर्थाभिधानेन । यथा साक्षः पुरुषः परेण चेन्नीयते, नूनमक्षिभ्यां न पश्यतीति गम्यते ।

नन्वर्थवादार्थं भविष्यतीति चेत् । न हि येन विधीयते, तस्य वाक्यशेषोऽर्थवाद इत्युक्तम् । न च निरपेक्षेण विहिते अर्थवादेन किञ्चिदपि प्रयोजनं क्रियते । अतो नार्थवादार्थं वचनम् ॥३१॥

### यज्ञे मन्त्रोच्चारणफलम् १,१

अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः । स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति । नैवम् । लोके तैरर्थैरवबुद्धैः

संव्यवहारः, इह देवताभिरप्रत्यक्षाभिर्यज्ञाङ्गैश्चाऽचेतनैः संलापे न कश्चित् यज्ञस्योपकारः । यद्यदृष्टं परिकल्प्येत, उच्चारणादेव तद्भवितुमर्हति । यद्धि कर्त्तव्यं, तत् प्रयोजनवत् । उच्चारणञ्च न कथञ्चित् न कर्तव्यं, यद्यपूर्वाय । यद्यर्थाय, यद्यर्थो न प्रत्याय्यते, न किञ्चिद् अनर्थकम् । यदि न प्रयुज्यते, समाम्नानानर्थक्यम् । तस्मादुच्चारणादपूर्वम् । तथा च तदर्थशास्त्रादि उक्तम् । तदुच्यते, अर्थप्रत्यायनार्थमेव यज्ञे मन्त्रोच्चारणम् । यदुक्तं न देवताभिर्यज्ञाङ्गैश्च संलापे प्रयोजनमस्तीति, यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनम् । कथम् । न ह्यप्रकाशिते यज्ञे यज्ञाङ्गे च यागः शक्योऽभिनिर्वर्त्तयितुम् । तस्मात्तन्निर्वृत्त्यर्थमर्थप्रकाशनं महानुपकारः कर्मणः, तञ्च करोतीत्यवगम्यते । तस्मादस्त्यस्य प्रयोजनम् । तच्च दृष्टं न शक्यमपवदितुम् । नार्थाभिधानं प्रयोजनमिति । नन्वर्थाभिधानेनोपकुर्वत्सु, तां चतुर्भिरादत्ते इत्येवमाद्यनर्थकं भवति । काममनर्थकं भवतु, न जातुचिदपजानीमहे दृष्टमर्थाभिधानस्योपकारकत्वम् ॥४०॥

[ २ ]

## तन्त्रवार्तिकम् (कुमारिलकृतम्)

### ब्राह्मणादीनां प्रत्यक्षजातित्वव्यवस्थापनम् १,२

कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयो लोकप्रसिद्धत्वाद् वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धम् । प्रत्यक्षेणेति ब्रूमः । कस्मात् पुनर्मातापितृसम्बन्धानभिज्ञाश्चक्षुःसंनिकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते । शक्त्यभावात् यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः । नैतत्तुल्यम् वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्व-

नुगतं शाखादिमद्रूपेण दृश्यते । न तु ब्राह्मणत्वम् । अपि च । व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते । न चोपवीताध्ययनादि निमित्तम्, वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात्संदिग्धम् । सर्वञ्च दुष्टशूद्रेषु संभाव्यमानत्वादनिश्चितम् । यस्त्वविचारितसिद्धमेव प्रतिपद्येत स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् ।

नैष दोषः । क्वचिद्धि काचिज्जातिग्रहण इतिकर्तव्यता भवतीति वर्णितमेतत् । तेन यथैवाऽऽलोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणव्यक्तिमहत्त्वसंनिकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणं तथैवात्रोत्पादकजातिस्मरणम् । अयं चोत्पाद्योत्पादकसम्बन्धो मातुरेव प्रत्यक्षोऽन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति । न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसंबन्धानुसारि प्रत्यक्षमित्येतत्साधितम् । न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यतां न प्रत्यक्षमित्येतदप्युक्तमेव । स्त्र्यपराधात्तु दुर्ज्ञानोऽयं संबन्ध इति स्वयमेव वक्ष्यति । न च तावन्मात्रेण प्रत्यक्षता हीयते । न हि यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम् । न च स्त्रीणां क्वचिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता । लोकविरुद्धानुमानासंभवात् । विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानम् । अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि । तथा च प्रतिकुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन जायते । दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेन्नत्वपत्यानां वर्णसंकरः । न च

नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यतरवर्णापत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागामिकं प्रत्येतव्यम्। न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः। तस्मात् सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनीति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः।

येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव न त्वाचारनिमित्तवर्णविभागे प्रमाणं किञ्चित्। सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते, तत्रेतरेतराश्रयता भवेत्। ब्राह्मणादीनामाचारस्तद्वशेन ब्राह्मणादय इति। स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम्। तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वतां युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः। एताभिरुपपात्तिभिस्त्वयं प्रतिपाद्यते। न तपआदीनां समुदायो ब्राह्मण्यम्। न तज्जनितः संस्कारः। न तदभिव्यङ्ग्या जातिः। किं तर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या। तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते 'मासेन शूद्रो भवति' इत्येवमादीनि कर्मनिन्दावचनान्यथ वा वर्गत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम्। पूर्ववच्चात्रापि क्लृप्तत्वात्प्रत्यक्षस्य कल्प्येनाज्ञानविधिना सह विकल्पो न सम्भवति। अपि च। तत्रानुष्ठानात्मकत्वाद्भवेदपि न त्वत्र वस्तुरूपाणामैकात्म्येनाविकल्प्यत्वात्। को हि तद्वेदेति पूर्ववदेवाज्ञानसंशयविपर्ययाणामनौपयिकत्वादानर्थक्यम्। निश्चितवेदप्रामाण्यैश्च त्रैविद्यवृद्धैर्विज्ञायमानत्वात्स्वार्थेऽप्यानर्थक्यम्। विकल्पाभावश्चानन्तरोक्तवत् ॥२॥

[ ३ ]

## बृहती (प्रभाकर-विरचिता)

### आत्मनः स्वसंवेद्यत्वस्थापनम् १,१,५

'प्रत्यगात्मनि चैतद्भवति'—इति कस्यार्थस्य सिद्धये भोक्तृत्वस्यैव । कथम् । प्रत्यगात्मनि भोगदर्शनात् । यदि परोऽप्यहंप्रत्ययस्य विषयतामापद्येत, तदा भोक्तृत्वहानं प्राप्नोति; भोक्तृता चात्मेत्युक्तम् । 'न परत्र, परो ह्यसौ, योऽन्यैर्ब्युर्दृष्टवान्' इति प्रत्यभिज्ञानुपपत्तिः । 'यत्राऽयमहंशब्दः' इति अहंशब्दोपन्यासस्तर्हि किमर्थः । परापह्नवाय । नापह्नवाय; परप्रतिपत्तये । किमिति तर्ह्यपह्नवः । साक्षाद्धेतुत्वशङ्कानिराकरणाय । साक्षाद्धेतुत्वं मन्वानेन अनात्मन्यप्यहंशब्दोऽस्ति इति प्रदर्शितम्—'परत्राप्यहंशब्दो भक्त्या दृश्यते' इत्येवमादिना । 'न वयम्' इति न साक्षाद्धेतुतयेदमुपन्यस्तम् इति प्रकटितम् । हेत्वर्थप्रदर्शनार्थस्तु शब्दप्रयोगः । ननु च 'अहं गच्छामि' इति न हेत्वर्थप्रदर्शनमात्रतया शक्यते परिहर्तुम्; अत्र हि अहंप्रत्ययोऽपि व्यभिचार्येवोपलभ्यते, अचलात्मकत्वादात्मनः । तस्मात् स्कन्धा एवालम्बनतामापद्यन्ते इत्याशङ्कनीयमिदम्, किमिति निराशङ्कैरेव गम्यते । किमत्राशङ्कनीयम् । इदंप्रत्ययग्राह्यं हि कार्यकरणम्; प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययान्तरालम्बनता नोपपद्यते 'गौर्वाहीकः' इति यथा । गौण उपपद्यते इति चेत् परिहृतमेतत्त्वयैव । तस्मादसंभिन्नेदंप्रत्यय एव अहंप्रत्यय आत्मन आलम्बनम्, ब्राह्मणमप्यमुमेवार्थमनुवदति—'अशीर्यो नहि शीर्यते' इत्यशीर्यतया भोक्तृत्वमात्मनः 'विनश्वरं च विज्ञानम्' इति तद्व्यतिरिक्तालम्बनतामापादयति । तस्मात् व्यामोहो-

ऽयमहंकारग्रन्थिरिति न शक्यते वक्तुम्, 'यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययः; नान्यः' इति सिद्धत्वादस्यार्थस्य। यदि परं ब्रह्मविदामेष निश्चयः—यदुपलभ्यते, तदसत्; यन्नोपलभ्यते, तत्तत्त्वमिति, नमस्तेभ्यः, विदुषि नोत्तरं वाच्यमित्यत्र परिहारः। तस्माद्यथार्थोऽयमर्थवादः— 'स एष यज्ञायुधी यजमानः' इति।

"आह—यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य, तन्निदर्श्यताम् 'इदं तदीदृशं च' इति" इति किमिदं चोद्यते। इदमेव चोद्यते। तदेव न ज्ञायते। कथं न ज्ञायते। इत्थं न ज्ञायते—किं वा सविज्ञानस्यात्मनोऽहंप्रत्ययः प्रमाणतयोपन्यस्तः, येनेदमुच्यते—विज्ञानमपास्य तन्निदर्शयितव्यम् इति। अनेकवस्त्वालम्बनं हि यत्र ज्ञानम्, तत्रेदं युज्यते वक्तुम्—इदमपास्येदं निदर्शय इति; इह त्वेकात्मरूपैव संवित्। तस्मात् इदं व्युदसनीयम् इति तमसि पदम्। अत्रोच्यते—अयमस्याभिप्रायः; ज्ञेयत्वे ह्यात्मनो ज्ञानज्ञातृणी व्यतिरिक्ते न शक्येते वक्तुम्; न चापास्यैव ते संविदस्तीति सिद्धम्। तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक् प्रमेयतया निदर्श्यताम्।

'अत्रोच्यते— स्वसंवेद्यः स भवति; नासावन्येन शक्यते द्रष्टुम्' इति। किमिदमस्योत्तरमुपपद्यते। किमिति नोपपद्यते। एवं नोपपद्यते—सैवेयं पूर्वोक्तैकालम्बनानेकाकारता प्रत्ययस्याभ्युपगता भवति। अविवेकापराधोऽयम्, नात्रायुष्मतो दोषः। ननु च अहंप्रत्ययोऽयम् 'अहमिदमदर्शम्' इत्युपन्यस्तः, न 'अहमदर्शम्' इति। एवं च सति केयमनेकाकारता। 'अविवेकः परमापदां पदम्।' यदि ह्यात्मशब्दवाच्यतया ज्ञेयतोपन्यस्ता स्यात्, प्रमेयान्तरशून्यता वा, तदैतच्चोद्यमभविष्यत्; इह तु सर्वज्ञेयप्रमातृतयैव संविदुपन्यस्ता; तस्मात् प्रतिपक्षोपन्यास एवायं कथं तेनैव बाध्यते। नहि यद्यस्य बाध्यम्, तत्तस्यैव बाधकं भवितुमर्हति।

तस्मात् सम्यगुत्तरम्। 'यथा कश्चिच्चक्षुष्मान्' इत्यनेनापि निदर्शनेन कर्तृकरणान्तरनिषेध एव स्थिरीकृतः। ननु चात्र कर्त्रन्तरं करणान्तरं भिन्नं मेयात्; तत् किमिदं निदर्शनम्, कर्त्रन्तराभावसामान्यात्। तस्मात् कारणदोषराहिता अविपरीता च संवित्। आत्मास्तित्वे हेतुः। भवतु वा कर्त्रन्तरं मा वा। उक्तं च—यथा अवगम्यन्तेऽर्थाः, तथा भवन्ति इति।

[ ४ ]

## प्रकरणपञ्चिका (शालिकनाथकृत)

### ब्राह्मणत्वादीनां जातित्व-निरासः २

अनयैव च दिशा ब्राह्मणत्वादिजातिरपि निवारिता। नहि नानास्त्रीपुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति। नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते। यदप्याहुः, यद्यप्यापातसंजातया धिया ब्राह्मण्यं नावसीयते ब्राह्मणभूतमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति। तदपि च स्वमानसाविसंवादि। अनुसन्दधानोऽपि मातापितृसम्बन्धं को जात्वेकमाकारमवबोद्धुं प्रभवति। यच्चोपदर्शितं, यथा विलीनमाज्यं तैलादव्यातिरिच्यमानं गन्धग्रहणसहकारिणा चक्षुषैव भिन्नमवगम्यत इति। तदपि न सुन्दरम्। नहि तदानीं चाक्षुषस्य संवेदनस्य विषयातिरेकः किं त्वनुमानमेव तत्र सार्पिषो यस्तु निपुणदर्शी सूक्ष्ममपि रूपमीक्षितुं क्षमः स चक्षुषैवाज्यजातिमपि प्रत्येति। न गन्धग्रहणमपेक्षते।

नन्वेवं बह्ववहीनं किंनिबन्धनो हि तदानीमाहवनीयादिसाध्यकर्मसु केषांचिदधिकारो नान्येषाम्; किंनिबन्धना च ब्राह्मणशब्दस्य प्रवृत्तिव्यवस्था। अत्रोच्यते—अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत्

काश्चिदेव पुरुषसन्ततयः सन्ति तासामन्योन्यव्यतिरेकजाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः। अनिदम्प्रथमतया च सन्ततेः सर्वेषां तत्सन्ततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता। तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः। तत्प्रभवानामेव कर्मस्वधिकार इति न किञ्चिदवहीनम्। के पुनस्ते सन्ततिविशेषाः। न ते परिगणय्य निर्देष्टुं शक्यन्ते, किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः। तथा च तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः। कथं पुनस्तज्जन्यत्वमेव शक्यमवगन्तुम्। स्त्रीणामपराधसम्भवात्। सम्भवन्ति हि पुंश्चल्योऽपि स्त्रियः परिणेतारं व्यभिचरन्त्यः।

उच्यते—उक्तमेतत् दृश्यादर्शनमेवाभाव इति। यत्र यावदुपलब्धिसामग्री तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते तासां नास्त्येव व्यभिचार इति लोकप्रमाणकमेतत्। अपि च अप्रमत्तैः स्त्रियो रक्षणीयास्तासु नास्त्येव व्यभिचारसम्भावनावकाशो यासु त्वस्ति मा भूत् तदपत्येषु तत्सन्ततिप्रभवत्वनिश्चयः। न चैतावता यत्रापि निश्चयः शक्यस्तत्राप्यनिश्चय इति युक्तमिति। यच्च बह्वीषु ज्वालास्वेकवर्तिवर्तिनीषु ज्वालात्वं सामान्यं प्रत्यभिज्ञागोचरः कैश्चिदिष्यते तदपि गुरुरस्माकं न मृष्यति। स खल्वेवं निरीक्षांचक्रे अन्यथासिद्धा बुद्धिः सामान्यकल्पनाबीजम्। इयं तु भेदाग्रहणेन शुक्तिकारजतप्रत्ययवदुपपद्यत इति नालं सामान्यमुपस्थापयितुम्। तेन भेदग्रहणपुरस्सरमभेदज्ञानं भिन्नेषु जात्यभ्युपगमे शरणमिति निरवद्यम्।

[ ५ ]

## उत्तरमीमांसा (वादरायणकृता)

### (शाङ्करभाष्यम्)

### अध्यासलक्षणम् उपोद्घातः

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद् विरुद्धस्वभाव-

योरितेरतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावा-नुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्यय-गोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्। तथाप्यन्योन्यस्मिन्नन्योन्यात्मकताम-न्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन, अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञान-निमित्तः सत्यानृते मिथुनीकृत्य, अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः। आह—कोऽयमध्यासो नामेति। उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः। तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति। केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति। अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते इति। सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति। तथा च लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति।

**व्यवहारस्य सदसद्भाव-विवेकः** २,१,१४

नन्वेकत्वैकान्ताभ्युपगमे नानात्वाभावात्प्रत्यक्षादीनि लौकिकानि प्रमाणानि व्याहन्येरन्निर्विषयत्वात् स्थाण्वादिष्विव पुरुषादिज्ञानानि। तथा विधिप्रतिषेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत, मोक्षशास्त्रस्यापि शिष्यशासित्रादिभेदापेक्षत्वात्तदभावे व्याघातः स्यात्। कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येतेति। अत्रोच्यते—नैष दोषः। सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्वोपपत्तेः। स्वप्नव्यवहारस्येव प्राक्प्रबोधात्। यावद्धि न सत्यात्मैकत्वप्रतिपत्तिस्ता-वत्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्पद्यते। विकारा-नेव त्वहं ममेत्यविद्ययात्मीयेन भावेन सर्वो जन्तुः प्रतिपद्यते स्वाभाविकीं ब्रह्मात्मतां हित्वा। तस्मात् प्राग्ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः। यथा सुप्तस्य प्राकृतस्य जनस्य स्वप्न उच्चावचान्

भावान्पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधात्, न च प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, तद्वत्। कथं त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत। नहि रज्जुसर्पेण दष्टो म्रियते। नापि मृगतृष्णिकाम्भसा पानावगाहनादि प्रयोजनं क्रियत इति। नैष दोषः। शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः। स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात्। तत्कार्यमप्यनृतमेवेति चेद् ब्रूयात्। तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतं तथापि तदवगतिः सत्यमेव फलं प्रतिबुद्धस्याप्यबाध्यमानत्वात् न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येति मन्यते कश्चित्। एतेन स्वप्नसदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः।

[ ६ ]

## ब्रह्मसिद्धिः (मण्डनमिश्रविरचिता)

### अविद्याया अधिष्ठानविचारः १

अत्रोच्यते—नाविद्या ब्रह्मणः स्वभावः, नार्थान्तरम्, नात्यन्तमसती, नापि सती; एवमेवेयमविद्या माया मिथ्यावभास इत्युच्यते। स्वभावश्चेत् कस्यचित्, अन्योऽनन्यो वा परमार्थ एवेति नाविद्या; अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम्, तस्मादनिर्वचनीया। सर्वप्रवादिभिश्चेत्थमियमास्थेया। तथा हि—शून्यवादिनां सत्त्वे यथादर्शनम्, नाविद्या; खपुष्पतुल्यत्वे न व्यवहाराङ्गम्। विज्ञानमात्रवादिनोऽपि यथावभासं ज्ञानसद्भावे नार्थापह्नवः, नीलपीतादेर्ज्ञेयाकारस्य बहिरवभासानपह्नवात्, अत्यन्तासत्त्वे बहिरवभासायोगात्, खपुष्पवत्। बाह्यार्थवादिनामप्यनित्यादिषु नित्यादिख्यातयो रजतादिविभ्रान्तयश्चावभासमानरूपसद्भावे नाविद्यात्व-

मश्नुवीरन्; नात्यन्तासत्त्वे तन्निबन्धनः कश्चन व्यवहारः स्यात्। स्यादेतत्—अवभासमानं रूपं मा भूत्, अवभासस्तु सन्नेव, स चाविद्येति गीयते। नैतत् सारम्; अवभासमानेऽसति तदवभासोऽपि सत्यतो दुर्निरूपः; अवभासमात्रं तु स्यात्; तदवभास इत्यपि भ्रान्तिरेव। तस्मान्नाविद्या सती, नाप्यसतीति। अत एव चास्या निवृत्तिरदृढस्वभावायाः, मायामात्रत्वात्; अन्यथास्वभावे दृढं व्यवस्थितायाः कथमन्यथात्वम्। स्वभावाहानात्; शून्यत्वे स्वयं निवृत्तत्वात्। एवं च नाद्वैतहानम्, न निवर्तनीयस्याभावो वा।

यत्तु कस्याविद्येति, जीवानामिति ब्रूमः। ननु न जीवा ब्रह्मणो भिद्यन्ते, एवं ह्याह—'अनेन जीवेनात्मनानुप्रविश्य' इति। सत्यं परमार्थतः; कल्पनया तु भिद्यन्ते। कस्य पुनः कल्पना भेदिका। न तावद् ब्रह्मणः, तस्य विद्यात्मनः कल्पनाशून्यत्वात्; नापि जीवानाम्, कल्पनायाः प्राक् तदभावात्, इतरेतराश्रयप्रसङ्गात्—कल्पनाधीनो हि जीवविभागः, जीवाश्रया कल्पनेति।

अत्र केचिदाहुः—वस्तुसिद्धावेष दोषः, नासिद्धं वस्तु वस्त्वन्तरनिष्पत्तयेऽलम्, न मायामात्रे; न हि मायायां काचिदनुपपत्तिः, अनुपपद्यमानार्थैव हि माया; उपपद्यमानार्थत्वे यथार्थभावान्न माया स्यात्। अन्ये तु—अनादित्वादुभयोरविद्याजीवयोर्बीजाङ्कुरसंतानयोरिव नेतरेतराश्रयत्वमप्रक्लृप्तिमावहतीति वर्णयन्ति। तथा चोक्तमविद्योपादानभेदवादिभिः—'अनादिरप्रयोजना चाविद्या' इति; तत्रानादित्वान्नेतरेतराश्रयत्वदोषः, अप्रयोजनत्वान्न भेदप्रपञ्चसर्गप्रयोजनपर्यनुयोगावकाशः। यदेके पर्यनुयुञ्जते—'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति, तत्र परस्य ब्रह्मणः प्रपञ्चसर्गप्रयोजनं वाच्यम्, न तावत् परानुग्रहः, प्राक् सर्गादनुग्राह्याणामभावात् दुःखोत्तरत्वाच्च सर्गस्य; नात्मार्थक्रीडादिः, आप्तकामत्वादिति—तस्य अविद्यानिबन्धने सर्गे नावकाशः; नह्यविद्या

प्रयोजनमपेक्ष्य प्रवर्त्तते; नहि गन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति। तथा 'पुरुषस्य विशुद्धस्य नाशुद्धा विकृतिर्भवेत्' इत्यपि प्रयुक्तमविद्यानिबन्धने सर्गविभागे। अपि च कृतार्थानामाप्तकामानामेव क्रीडादिप्रवृत्तिरुल्लासात्; प्रार्थनापरिक्लिष्टचेतसां तु रतिविरहिणामनभिमतैव क्रीडा भवति। न च वैषम्यनैर्घृण्यदोषः; न हि मायाकारस्य विविधं प्रपञ्चं दर्शयतोऽङ्गसाकल्यवैकल्यविभागेन रागद्वेषविभागः। चित्रपुस्तादिकृतां वा विकलाविकलादिभेदेन चित्राणि तानि तानि कुर्वताम्, बालानां च मृन्मयादिभिः प्रतिकृतिभेदैर्विचित्रैः क्रीडतां न तेषु किंचिद्वैषम्यं नैर्घृण्यं वा। कर्माशयानुरोधेन च विदधतो वैचित्र्यं न दोष इत्याचार्याः। न चानीश्वरत्वदोषः; नहि सेवाभेदानुरोधेन फलभेदप्रदः प्रभुरप्रभुर्भवति। तथा शुद्धस्याप्यशुद्धो विकारः; नहि प्रकृतिविकारयोरत्यन्तमवैलक्षण्यम्; प्रकृतिविकारभाव एव न स्यात्। द्रवाणां चापां करकादिः कठिनो विकारः, तथाचेतनस्य गोमयस्य चेतनो वृश्चिक इत्यादि बहुविधं प्रकृतिविकारवैलक्षण्यमुत्प्रेक्षितव्यमित्यलमतिप्रसङ्गेन।

[ ७ ]

## पञ्चपादिका ( पद्मपादाचार्यविरचिता )

### ब्रह्मजिज्ञासारम्भे कारणान्तराणि २

सिद्धैव ननु ब्रह्मजिज्ञासा। 'अथातो धर्मजिज्ञासे'ति सकलवेदार्थविचारस्योदितत्वात्। ब्रह्मज्ञानस्य च चोदनालक्षणत्वेन धर्मस्वरूपत्वात्, अतः सिद्धैव ब्रह्मजिज्ञासाऽपि। अभ्यधिकाशङ्काऽभावादिति। अत्र केचिद् अभ्यधिकाशङ्कां दर्शयन्तो ब्रह्मजिज्ञासां पृथग् आरभन्ते। केयमत्राभ्यधिकाऽऽशङ्का। 'चोदनालक्षणोऽर्थो धर्मः' इति ब्रुवता विधेः प्रामाण्यं दर्शितम्। अत्र केषुचिद् वाक्येषु विधिरेव न श्रूयते—'सदेव सोम्येदमग्र आसीदि'त्येवमादिषु; यत्रापि विधिः श्रूयते

'आत्मा वा अरे द्रष्टव्यः, तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि'ति। तत्र यद्यपि कृत्या अविशेषेण विधौ स्मर्यन्ते; तथाऽपि, यो भावाभिधायी तव्यप्रत्ययः, स क्रियायां पुरुषं नियोक्तुं शक्नोति। यत्र पुनः कर्म प्राधान्येनोच्यते, तत्र द्रव्ये गुणभूतां क्रियां कार्यान्तरसम्बन्धित्वेन विधातुं न शक्नोति। द्रव्यपरत्वे चानुत्पाद्यत्वात्, अविकार्यत्वात्, अनाप्यत्वात्, असंस्कार्यत्वात्, संस्कृतस्य च कार्यान्तरे उपयोगाभावादसंस्कार्यत्वम्। अतः—'आत्मानमुपासीते'त्यात्मन ईप्सिततमत्वं न संभवति।

अथ पुनर्विपरीतो गुण-प्रधानभावः सक्तुन्यायेन कल्प्येत, तत्रापि न ज्ञायते—किं तदुपासनम्, कथं चात्मना तत् क्रियत इति। अथ ज्ञायते ज्ञानमुपासनम्, आत्मा च विषयभावेन तन्निर्वर्तयतीति, एवं तर्हि तदेवायातम्—ज्ञानेनात्माऽऽप्यत इति, तच्च कृतकरणमनर्थकम्; नित्याप्तत्वादात्मनः। संस्कार्यत्वे चोपयोगाभाव उक्तः। अतो विध्यभावादविवक्षितार्था वेदान्ताः, इति धर्मजिज्ञासानन्तरं स्नाने प्राप्त इदमारभ्यते—अथातो ब्रह्मजिज्ञासेति।

अनन्तरं ब्रह्म जिज्ञासितव्यम्, न स्नातव्यमित्यभिप्रायः। कर्माभिधायिनोऽपि कृत्यप्रत्ययान्नियोगसंप्रत्ययान्न नियोक्तृत्वं निराकर्तुं शक्यते; 'कटस्त्वया कर्तव्यः' 'ग्रामस्त्वया गन्तव्यः' इतिवत्। यत्तूक्तम्—द्रव्यपरत्वे प्रयोजनाभावादानर्थक्यं नियोगस्येति, तदसत्; अविद्योच्छेदस्योपलभ्यमानत्वात्। अविद्या च संसारहेतुभूता।

अपरे पुनरेवमारभन्ते—ब्रह्मणि प्रत्यक्षादिप्रत्ययान्तराणामसंभवात् परिनिष्पन्ने वस्तुनि प्रतिपत्तिहेतुतया संभावितसामर्थ्यानामप्याम्नायस्य पुनः कार्यविषयतया सुतरामसंभवं मन्वानस्य भवति संकर्षपर्यन्ते वेदार्थविचारावसानमिति बुद्धिः, तन्निरासार्थं पुनः प्रतिज्ञातम्।

इहापि सर्वेष्वेवात्मज्ञानविधानेषु कार्यनिष्ठतां वर्णयन्ति समाम्। तत्त्वावबोधश्च कार्यम्; अधिकारनियोगविषयतयाऽवगमाद् इति; ततस्तद्विचारार्थं शास्त्रमारब्धव्यमिति।

अत्रोच्यते—नारब्धव्यम्; गतार्थत्वात्। कथम्। यस्तावत्प्रथम आरम्भप्रकारः कर्मणि कृत्यप्रत्ययेन नियोगसंप्रत्यय इति, तत् स्वयमेव विधायकत्वं दर्शितम्। प्रसिद्धं चैतत् 'स्वाध्यायोऽध्येतव्यः' इत्येवमादीनां विधायकत्वम्। नात्राधिकाशङ्काकारणं किञ्चित्। ननु चतुर्विधस्यापि क्रियाफलस्यात्मन्यसंभव उक्तः। यद्येवं सक्तुन्यायो भविष्यति। तदपि न; आत्मविषयज्ञानस्य नित्यसिद्धत्वादित्युक्तम्। सिद्धस्यैव पुनरभ्यासो विधिनिमित्त उपासनाख्यो भविष्यति; अभ्युदयफले हिरण्यधारणवत्। ननु न विधानतोऽप्यात्मविषयज्ञानसन्तानः कर्तव्यः, स तु नित्यमात्मनि जाग्रतः सिद्धः? एवं तर्ह्यर्थाविरुद्धेषु कालेष्वात्मन्येव चेतःसमाधानं भविष्यति।

यत्पुनरात्मज्ञानादविद्योच्छेदस्तदुच्छेदात् संसारनिवृत्तिः फलमित्युपन्यस्तम्, तदसत्; अहमित्यात्मानं नित्यमेव जानाति सर्वो लोकः। न च संसारो निवृत्तः। अथ पुनरहं प्रत्ययावसेयादन्यदेवात्मरूपं पराकृतभोक्तृ-भोक्तव्य-भोगग्रन्थिज्ञेयत्वेनात्मज्ञानविधिना ज्ञाप्यत इति, तदसत्; विधिर्हि सामान्यतः सिद्धस्य क्रियात्मनो विशेषसिद्धौ प्रभवति, नात्यन्तासिद्धसद्भावे। तद् यदि नाम ज्ञानं लोके सिद्धम्, तथाऽपि निरस्तप्रपञ्चात्माविषयमसिद्धमाकाशमुष्टिहननवन्न विधातुं शक्यम्। अथ तादृगात्मज्ञानं सिद्धम्, किं विधिना। यदपि मतान्तरम्—प्रत्यक्षादेरगोचरत्वात् शास्त्रस्य च कार्यार्थत्वात् संकर्षपर्यन्त एव विचारे वेदार्थपरिसमाप्तौ प्राप्तायां वेदान्तेष्वपि कार्यनिष्ठता समाना, ब्रह्मतत्त्वावबोधश्च कार्यम्; अधिकारिनियोगविषयतयाऽवगमात्; अतस्तद्विचाराय शारीरकारम्भ इति,

तदप्युक्तेन न्यायेन ब्रह्मावगमस्य सिद्धत्वेऽसिद्धत्वे च कार्यत्वासंभवेन प्रत्युक्तम् ।

अपरं मतं—सत्यं कार्यविषयो वेदः न तु तावन्मात्रे; तस्मिन् सति यो योऽर्थोऽवगम्यते, स स वेदार्थः, यथा रूपे सति चक्षुषः प्रवृत्तिः, न च रूपमात्रं चक्षुषो विषयः, किन्तु तस्मिन् सति द्रव्यमपि; एवमिहापि वस्तुतत्त्वमपि विषयः । कथं तत् । उच्यते; 'इदं सर्वं यदयमात्मे'ति न तावत् सर्वरूपताऽऽत्मन उपदिश्यते । यदि सर्वरूपताऽऽत्मन उपदिश्येत, ततः सर्वस्याचेतनत्वात् तद्रूपत्वे बोद्धृत्वहानौ बोधकत्वं शब्दस्य हीयेत; अतः सर्वस्यात्मस्वभावता विधीयते । अनात्मस्वरूपविलयेन हि वस्तुनोऽवगतिर्दृष्टा । ननु अत्र विधिर्न श्रूयते; कल्प्यतां तर्हि विधिः । किं प्रतीते विध्यर्थे विधिः कल्प्यते, उताप्रतीत इति । यदि प्रतीते कल्प्यते, कल्पनावैयर्थ्यम् । अर्थप्रतीत्यर्थं हि शब्दो मृग्यते । प्रतीतेऽर्थे शब्दं कल्पयता किं कृतं स्यात् । अथाप्रतीत एव विध्यर्थे विधिं कल्पयित्वा ततोऽर्थः प्रतिपत्तव्य इति, अपूर्वं प्रमाणकौशलम् ।

ननु अश्रूयमाणविधिष्वपि 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि'त्यादिषु विधिः कल्पितः; सत्यम्, युक्तं तत्र पूष्णः पिष्टद्रव्यसम्बन्धः समासाभिहितो न सिद्धो वर्तते, नापि कुतश्चिद्भविष्यतीति; प्रमाणाभावात् । नापि विधिना केनचित् पदैकवाक्यता, येन वपोत्खननादिवत् कथञ्चिदालम्बनं कल्प्येत । अतो निरालम्बनत्वपरिहाराय कार्यपरता कल्प्यत इति ।

[ ८ ]

## इष्टसिद्धिः ( विमुक्तात्मविरचिता )

### देहात्मवादखण्डनम् ७

मैवं भेदस्य मायात्वान्माय्यात्मैकोऽस्त्यवोधदृक् ।
बोधादज्ञाननाशोऽष्टेर्मुक्तिस्स्याद्वपुरादि न ॥१९॥

देहाद्येवास्ति, दृष्टत्वात्; नात्मा मुक्तिश्च, अदृष्टत्वात्—इत्येवं मा वोचत, सर्वस्य भिन्नस्याद्यन्तवत्त्वाद्रज्जुसर्पवन्मायात्मत्वात्, तन्मायाश्रयैकादृश्याजन्मानाद्यनन्तात्मनोऽभ्युपेयत्वात्। न च भेदोऽबाध्यः, अनुमया बाधितत्वात् द्विचन्द्रादिभेदवत्। न च भानानिवृत्तेर्भेदस्याबाधिका अनुमा, अनुमाप्तोक्त्यादिबाधितभेदस्यापि द्विचन्द्रादेर्भेदस्फुरणदृष्टेः। अनुमानादेरमानत्वाद् द्विचन्द्रदिङ्मोहादि अबाध्यं तेनेति चेत्, सिद्धमनुमानादेर्मानत्वम्। नह्यनुमानेनाबाध्यमित्येतत् प्रत्यक्षम्, अतोऽनुमानेन तत्साध्यम्। न चामानं साधकम्। अतस्तत् मानं तेऽपि। न मे तत् मानम् तव तु स्यात्; अतस्तेन तव प्रतिपत्तिरिति तेन त्वया व्यवहरामीति चेत्, एतच्च कुतोऽज्ञायि। त्वद्वाक्यादिति चेत्, तर्हि मद्वाक्यमपि ते मानम् अज्ञातार्थबोधकत्वादक्षजवत्। तदर्थश्च सत्यः प्रत्यक्षार्थवत्। अतोऽनुमानस्य मानत्वं सिद्धम्। मद्वाक्यमपि चेन्मानम्, सुतरां वेदो मानम्। अतो मत्पक्षस्सिद्धः, त्वत्पक्षश्च हतः। अथ अमानं ते मद्वाक्यम्, तच्चेत्ते न बोधकम्, न मया वादो युक्तः। बोधकं चेत्, बुद्धस्य उत अबुद्धस्य। बुद्धस्य चेत्, त्वया उत मया। त्वया चेत्, तेऽनक्षजमपि मानम्। न हि 'अनुमानं मे प्रमाणम्, तेन मम प्रतीतिर्भवति' इत्ययं मद्वाक्यार्थस्ते प्रत्यक्षः। स च त्वया ज्ञात उक्तः। न चेद् बुद्धस्त्वया किं तु मयैव—तदापि मद्वाक्यं ते मानम्, अबुद्धबोधकत्वाद् बाधासंभवाच्च मन्मानमूलत्वाच्च मद्वाक्यस्य। त्वद्भ्रान्तिमूलं त्वद्वाक्यम्, तदर्थे ते मानासंभवादिति चेत्, एवं चेज्जानीषे नानुमया मया वादस्ते युक्तः, तस्या मद्बोधकत्वस्यासिद्धस्ते मद्वाक्यादन्यतश्चासिद्धेः। कथं चामानं ते मद्वाक्यं बोधकं चेत्। न चेत्, कथं तत् भ्रान्तिमूलं निश्चितम्। न हि तदर्थोऽन्यतस्ते सिद्धः। अतो न तत्र मानासंभवधीः, ययास्य भ्रान्तिमूलतां वेत्सि। सिद्धं चेत्, नतराम्। नहि मानसिद्धे

तदसंभवः । भ्रान्त्या सिद्धश्चेत्, त्वद्भ्रान्त्या चेत्, नासौ मद्वचोऽर्थः । अतस्तन्मानासंभवेऽपि न मद्वचो भ्रान्तिमूलं स्यात् । मद्भ्रान्त्या चेत्सिद्धः, स कथं ते सिद्धो मद्वचोऽनुमां वा विना । नहि मद्भ्रान्तिस्तदर्थो वा ते प्रत्यक्षः । मद्गिरा चेत्तं वेत्सि—सोऽर्थस्सत्यः, सा च मानं ते । पुंगिरा—एवमयं पुरुषो वेद विवक्षति वा—इति धीस्स्यात्, न त्वेवमर्थ इति । अतस्तन्मानासंभवधिया तद्भ्रान्तिमूलता निश्चीयत इति चेत्, तर्हि सत्यमसत्यं च भूतं शब्दाद्वेत्सि । अतो भूते स व्युत्पन्नस्ते, अन्यथा विवक्षादेरप्यबोधकत्वाच्छाब्दव्यवहारलोपः पुंसाम् । अतो मानमूलं स्वतन्त्रं वा अबुद्धबोधकं वचो मानमेव सर्वेषाम्, अन्यथा विवक्षाद्यपि अतस्ते न विदुः । तत्र ह्यनपेक्षश्शब्दो मानं तेषामपि । कथं च त्वया वक्तृविवक्षादिशब्दाज्ज्ञातं भ्रान्तिमूलत्वं वा तदर्थे मानासंभवे । न हि स्वविवक्षावेदनभ्रमाद्यपि तेऽक्षजगम्यम्, रूपादिहीनत्वाच्चक्षुराद्यगोचरत्वात् । न च रूपादयो विवक्षादेस्स्वरूपम्, तद्विषयत्वात् । न चैकस्य विषयविषयिभावो घटादिवत् । न च चक्षुरादेरन्यत् रूपादिहीनवस्तुबोधकं करणं तेऽस्ति, अदृष्टत्वादरूपादिमद्वस्त्वभावाच्च । भूतचतुष्टयतत्कार्यमात्रवस्तुवादिनस्सर्वस्य भौतिकत्वाद्रूपादिमत्त्वाच्चक्षुरादिवेद्यं विवक्षाद्यपीति चेत्, अन्यविवक्षादेरपि तद्रूपादिवत्प्रत्यक्षत्वात्ते वाक्यं व्यर्थम् । अतः स्वविवक्षाद्यपि नाक्षवेद्यम् । उक्तं चासकृत् मातृतत्संबन्धिनां मानामेयत्वमनवस्थादिदोषोक्त्या । अतो देहश्चेन्माता, न तेन तदीयेन वा स्वयं स्वकीया वा मेया । अतो न चैतन्यस्यापि तदीयत्वे अस्ति मानं रूपादिवत् । अतः स्वदेहासिद्धौ तद्वेद्यान्यदेहघटाद्यसिद्धिः । अन्यवेद्यत्वाच्चामातृत्वं देहस्य घटवत् । अतो देहस्य मातृत्वे न किंचित्ते सिध्येत् । चैतन्येन सर्वं भातीति चेत्, तदपि देहस्य चेत्, न तेन स तदीया रूपादयोऽन्यदेहघटादयश्च

भान्ति तद्रूपादिनेव । अतश्चैतन्येन चेत्सर्वं भाति, स तस्यान्यो धर्मी धर्मो वेत्यभ्युपेयम् । अतोऽस्य विक्रियान्यसंबन्धासिद्धेस्तत् कूटस्थमद्वितीयं च । अतोऽस्यान्यथाभावो माययैव । मायासंबन्धोऽप्यस्योक्तन्यायेनैवा-मेयः । मायायाश्चामेयत्वात् । मानवत्त्वे च तयोस्सत्यत्वादात्मवत् माया-तत्संबन्धत्वहानिः । अतो मायासंबन्धो मायासंबन्ध एव । प्रपञ्चितं चैतत्पुरस्तात् । अतो माय्यात्मैको मयेष्टस्सिद्धः । अतो देहादेराद्यन्त-वत्त्वादिना उक्तस्य मायात्मत्वस्य नासिद्धिः । अनुमानादि च मानं तेऽपीति साधितं त्वत्प्रवृत्त्यैव । अपि च यदि नाम स्वविवक्षादि तेऽसिद्धम्, कथं ते अन्यविवक्षादि सिद्धम् । दृष्ट्वार्थं विवक्षन्नन्यस्मै वाक्यं प्रयुङ्क्ते । अतोऽन्योऽप्येवमिति वाक्य-प्रयोगादेव तदर्थज्ञानविवक्षे, तन्मानासंभवे च भ्रान्तिमूलतां तद्वाक्यस्यापि मद्वाक्यस्येव जान इति चेत्, तर्हि अनुमानाद्यपि मानमिष्टम्, वाक्य-लिङ्गेन तद्वक्तृज्ञानाद्यनुमानात् । न चैतत्प्रत्यक्षसिद्धम् । अभुक्तपीतान्न-पानादेः क्षुत्तृडादिनिवृत्तेरप्रत्यक्षत्वात्तदर्थप्रवृत्त्ययोगान्न ते जीवनमप्यनु-मानाद्यनिच्छतो युक्तम् । यदुक्तमदर्शनादात्मनो मुक्तेश्चाभाव इति, अदर्शनाच्चेदभावः, देहादेरप्यभावस्सुषुप्तादौ । पश्चाद्दर्शनात् भावश्चेत्, न, असतो दर्शनायोगात् । दर्शनाच्चेद्भावस्स्यात्, दर्शनभावयोरन्योन्या-श्रयता । अदर्शनमभावस्य बोधकं चेत्, मानान्तरमिष्टम् । कारकं चेत्, तन्मानं किम् । नादर्शनाभावतत्संबन्धानां प्रत्यक्षं मानम्, देहवत् सत्त्वप्रसङ्गाद् अरूपादिमत्त्वादभौतिकत्वाच्च । तेषां भौतिकत्वे च सत्त्वं देहादिवदेव । अतस्तत्सत्त्वेऽपि नात्मनोऽसत्त्वं देहवत्, अन्यथैकमेव सत् स्यात् । अदर्शनमस्फुरणं भावानां तत्कथं भाव इति चेत्, नाभावोऽपि, अदर्शनादभाव इत्युक्तेः । अतो न भावाभावमानाभ्यां तन्मेयम् । प्रप-ञ्चितं चैतत्पुरस्तात् । कथं च ते अदर्शनं भावानां सिद्धम् । नहि

जडानां सिद्धावसिद्धौ च तत् तेषां सिध्येत् । अतस्तच्चेत्सिद्धं ते, स्वयंप्रभस्यैव तत् तेनैव च सिद्धं त्वयाभ्युपेयम् । तस्य ज्ञानान्निवृत्तिश्च; अन्यथा ते शास्त्रकृतिर्व्यर्था, जीवनं च ते न स्यात् । तदेव च बन्धकारणम् । अत आत्मनो ज्ञानात्तन्निवृत्तेर्मोक्ष उपपन्नः । देहादिस्तु अज्ञानजत्वान्नाभूदस्ति भविष्यति चेति सिद्धम् ॥१९॥

[ ९ ]

## श्रीभाष्यम् ( रामानुजाचार्यकृतम् )

### अज्ञानस्य भावरूपत्वविचारः १,१,१

अत्रोच्यते—अहमज्ञो मामन्यं च न जानामीत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते । यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः स हि भावरूपाज्ञानेऽपि तुल्यः । विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्त्तकतया प्रत्यगर्थः प्रतिपन्नोऽप्रतिपन्नो वा । प्रतिपन्नश्चेत्, तत्स्वरूपज्ञाननिवर्त्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति । अप्रतिपन्नश्चेत्, व्यावर्त्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत ।

अथ विशदस्वरूपावभासोऽज्ञानविरोध्यविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति । हन्त तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषय आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात् । भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिद्ध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव । तथा हि । अज्ञानमिति ज्ञानाभावस्तदन्यस्तद्विरोधि वा । त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया । यद्यपि तमःस्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते तथापि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव । भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिद्ध्यति । अपि त्वज्ञान-

मित्येव। तथा सति ज्ञानाभाववत्तदपेक्षत्वं समानम्। ज्ञानप्रागभावस्तु भवताऽप्यभ्युपगम्यते प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव अहमज्ञो मामन्यं च न जानामीत्यनुभूयत इत्यभ्युपगन्तव्यम्।

नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति। स्वानुभवस्वरूपत्वात्। स्वानुभवस्वरूपमपि तिरोहितस्वरूपमज्ञान-मनुभवतीति चेत्, किमिदं तिरोहितस्वस्वरूपत्वम्। अप्रकाशित-स्वरूपत्वमिति चेत्। स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम्। स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकशितस्वरूपत्वमापद्यत इति चेत्, एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तम्। किं च ब्रह्मस्वरूपतिरोधानहेतुभूत-मेतदज्ञानं स्वयमनुभूतं सद् ब्रह्म तिरस्करोति ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम्। अनुभूतमेव तिरस्करोतीति चेत्, यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवतीति तिरोधानकल्पना निष्प्रयोजना स्यात्। अज्ञानस्वरूपकल्पना च। ब्रह्मणोऽज्ञानदर्शनवदज्ञान-कार्यतयाऽभिमतप्रपञ्चदर्शनस्यैव संभवात्। किं च ब्रह्मणोऽज्ञानानुभवः किं स्वतोऽन्यतो वा। स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानि-र्मोक्षः स्यात्। अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवन्निवर्तकज्ञानेना-ज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा। अन्यतश्चेत् किं च तदन्यत्। अज्ञानान्तरमिति चेदनवस्था स्यात्। ब्रह्म तिरस्कृत्यैव स्वयमनु-भवविषयो भवतीति चेत्, तथा सतीदमज्ञानं काचादि-वत्स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानाबाध्यत्वमज्ञानस्य न स्यात्।

अथेदमज्ञानं स्वयमनादि ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपातिरस्कृतिं च युगपदेव करोति। अतो नानवस्थादयो दोषा इति। नैतत्।

स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात्, हेत्वन्तरेण तिरस्कृतमिति चेत् तर्ह्यस्यानादित्वमपास्तम्। अनवस्था च पूर्वोक्ता। अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात्। अपि चाविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते, उत किंचित्प्रकाशते। पूर्वस्मिन् कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता, उत्तरस्मिन् कल्पे सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंशः तिरस्क्रियते, को वा प्रकाशते। निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयाऽसंभवेन तिरस्कारः प्रकाशश्च युगपन्न संगच्छेते।

अथ सच्चिदानन्दैकरसं ब्रह्माऽविद्यया तिरोहितस्वरूपमविशदमिवालक्ष्यत इति प्रकाशमात्रस्वरूपस्य विशदताऽविशदता वा किंरूपा। एतदुक्तं भवति। यस्सांशः सविशेषः प्रकाशविषयस्तस्य सकलावभासो विशदावभासः कतिपयविशेषरहितश्चाविशदावभासः। तत्र य आकारोऽप्रतिपन्नस्तस्मिन्नंशे प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यते। यश्चांशः प्रतिपन्नस्तस्मिन्नंशे तद्विषयप्रकाशो विशद एव। अतः सर्वत्र प्रकाशांशेऽवैशद्यं न संभवति, विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यं, तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपावैशद्यं नामाज्ञानकार्यं न संभवतीति।

[ १० ]

## अणुभाष्यम् (वल्लभाचार्यकृतम्)

**ब्रह्मणो विरुद्धधर्माश्रयत्वं भूषणम्** १,१,४

किञ्च, वेदान्तवाक्यानामस्मिन् शास्त्रे समन्वय एव प्रतिपाद्यते।

सन्देहनिराकरणद्वारा। तत्कथं सिद्धवद्धेतुत्वेन निर्देशः। अग्रिमवैयर्थ्यञ्च स्यात्। न च प्रतिज्ञागर्भितहेतुत्वम्। अनुपयोगात्। गौणमुख्यभावे परं विवादः। न च येन रूपेण समन्वयो मन्तान्तरस्थैर्विचारितः तथाऽग्रे सूत्रेषु निर्णयोऽस्ति। शास्त्रारम्भस्तु प्रथमसूत्र एव समर्थितः। तस्मात् समवायिकारणत्वमेवानेन सूत्रेण सिद्धम्। ननु कारणत्वमेवास्तु ब्रह्मणः किं समवायिकारणत्वेन विकृतत्वञ्च स्यात्। अनर्थरूपत्वेन कार्यस्यायुक्तता च। तस्मादनारम्भणीयमेवैतत् सूत्रमिति चेत्। मैवम्। सर्वोपनिषत्समाधानार्थं प्रवृत्तः सूत्रकारः। तद्यदि ब्रह्मणः समवायित्वं न ब्रूयाद् भूयानुपनिषद्भागो व्यर्थः स्यात्। 'इदं सर्वं यदयमात्मा', 'आत्मैवेद ँ सर्वम् स सर्वं भवति', 'ब्रह्म तं परादादि'त्यादि 'स आत्मान ँ स्वयमकुरुत', 'एकमेवाद्वितीयम्', 'वाचारम्भणं विकार' इत्यादि। एवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः। नन्वेवं निःसन्दिग्धत्वात् कथं सूत्रप्रवृत्तिः। उच्यते। अस्थूलादिवाक्यान्यपि सन्ति सर्वत्र प्रपञ्चतद्धर्मवैलक्षण्यप्रतिपादकानि। ततोऽन्योऽन्यविरोधे नैकस्य मुख्यार्थबाधो वक्तव्यः। तत्र स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादकानामेव कश्चित् कल्पयेत्। तन्माभूदिति जन्मादिसूत्रवत् समन्वयसूत्रमपि सूत्रितवान्। तथा चाऽस्थूलादिगुणयुक्त एवाविक्रियमाण एवात्मानं करोतीति वेदान्तार्थः सङ्गतो भवति। विरुद्धसर्वधर्माश्रयत्वन्तु ब्रह्मणो भूषणाय।

किञ्च, अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम्। कर्माधीनत्वे त्वनीशिता। ततः कर्तृत्वमपि भज्येत। ततः सर्वमाहात्म्यनाश एव स्यात्। नन्वेवमेवास्तु अपवादार्थत्वात् रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः। सर्वं समाप्नोषि ततोऽसि सर्व इति स्मृतेश्चेति चेत्। मैवम्। तथा सति पाषण्डित्वं स्यात्। एतादृशशास्त्रार्थाङ्गीकर्तुरासुरेषु भगवता गणितत्वात्।

असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥

इति शास्त्रानर्थक्यञ्च । सर्वं समाप्नोषीत्यप्यसंगतं स्यात् । वस्तु-परिच्छेदात् । न हि वेदो निष्प्रपञ्चरूपकथनमुक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति । तस्मादध्यारोपापवादपरत्वेन व्याख्यातृभिर्वेदान्तास्तिलापः कृता इति मन्यामहे । सर्ववाक्यार्थबाधात् । यथा निर्दोषपूर्णगुणविग्रहता भवति तथोपरिष्टाद् वक्ष्यामः । ननु पुरुषार्थाऽर्थानि शास्त्राणि । इदञ्च शास्त्रं मोक्षरूपपुरुषार्थसाधकम् । मोक्षश्चाविद्यानिवृत्तिरूप इति युक्तम् । अविद्या चाज्ञानं ज्ञानेनैव नश्यति । ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्तेऽध्यारोपापवादव्यतिरेकेण व्याख्यानमयुक्तम् । अतो यथाकथञ्चिद् व्याख्यानेऽपि पुरुषार्थसिद्धेर्न कोऽपि दोष इति चेत् । न । पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यं न स्वबुद्धिपरिकल्पितम् । अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः ।

पुरुषार्थः पुनर्यथा वेदान्तेष्ववगतः । 'ब्रह्म वेद ब्रह्मैव भवति', 'ब्रह्मविदाप्नोति परम्', 'न स पुनरावर्तते', 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्', 'अनावृत्तिः शब्दादनावृत्तिः शब्दादि'त्येवमादिभिः श्रुतिस्मृतिन्यायैर्ब्रह्मप्राप्तेरेव पुरुषार्थत्वं ब्रह्म च पुनर्न जीवस्यात्ममात्रम् अज्ञानवद्वा ।

एकस्यैव ममांशस्य जीवस्यैव महामते ।
बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरः ॥

इति भगवता जीवस्यैवाविद्यावत्त्वप्रतिपादनात् । तस्मान्न्यायोपबृंहितसर्ववेदान्तप्रतिपादितसर्वधर्मवत् ब्रह्म । तस्य श्रवणमनननिदिध्यासनैरन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैरतिशुद्धे चित्ते स्वयमेवाविर्भूतस्य

स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः। तस्मात् सर्वे वेदान्ताः स्वार्थ एव युक्तार्था इति न्यायैर्वक्तव्यत्वाद् ब्रह्मणः समवायित्वाय समन्वय-सूत्रं वक्तव्यम्।

एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादि-सूत्रद्वयेन वेदप्रमाणकजगत्कर्तृसमवायि चेत्युक्तम्। एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्तव्यता सिद्धा। तत्र ब्रह्मणि चतुर्द्धा विचारः। स्वरूपसाधनफलप्रतिपादकानि वेदान्तवाक्यानि त्रिविधानि मतान्तर-निराकरणञ्च। तत्र स्वरूपे विचारिते मतान्तरनिरासव्यतिरेकेण साधनफल-योरनुपयोगात्। अतः प्रथमं स्वरूपनिर्णयः। तदनु मतान्तरनिरासः। तदनु साधनानि फलञ्चेति। तत्र प्रथमेऽध्याये स्वरूपवाक्यानि विचार्यन्ते। तानि द्विविधानि। सान्दिग्धानि, निःसन्दिग्धानि च। तत्र निःसान्दिग्धानां निर्णयो न वक्तव्यः। सान्दिग्धानि पुनश्चतुर्विधानि। कार्यप्रतिपादकानि। अन्तर्यामिप्रतिपादकानि। उपास्यरूपप्रतिपादकानि। प्रकीर्णकानि चेति। तत्र प्रथमपादे कार्यवाक्यानां निर्णय उच्यते। सच्चिदानन्दरूपे-णाकाशवायुतेजोवाचकवाक्यानि षड्विधान्यपि निर्णीयन्ते। अन्यत्रान्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानीति।

[ ११ ]

## साङ्ख्यकारिका (ईश्वरकृष्णकृता)

### (साङ्ख्यतत्त्वकौमुदी वाचस्पतिमिश्रकृता)

### पुरुषधर्माः

एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह—

**तस्माच्च विपर्यासात्, सिद्धं साक्षित्वमस्य पुरुषस्य।**
**कैवल्यं माध्यस्थ्यं, द्रष्टृत्वमकर्तृभावश्च ॥१९॥**

'तस्माच्च' इति च-शब्दः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति। 'विपर्यासादस्माद्' इत्युक्ते 'त्रैगुण्यविपर्ययाद्' इत्यनन्तरोक्तं संबध्येत, अतस्तन्निरासाय 'तस्माद्' इत्युक्तम्, अनन्तरोक्तं हि सन्निधानादिदमो विषयो, विप्रकृष्टं च तद इति विप्रकृष्टं 'त्रिगुणमविवेकि' इत्यादि संबध्यते। तस्मात् त्रिगुणादेः यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वं च।

तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते, चेतनो हि द्रष्टा भवति नाचेतनः, साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी, यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयत एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी, न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी, अत एव द्रष्टापि भवति।

अत्रैगुण्याच्चास्य कैवल्यम्, आत्यन्तिको दुःखत्रयाभावः कैवल्यम्, तच्च तस्य स्वाभाविकादेवात्रैगुण्यात् सुखदुःखमोहरहितत्वात् सिद्धम्, अत एवात्रैगुण्यान्माध्यस्थ्यम्, सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति तदुभयरहितस्तु 'मध्यस्थ' इति, 'उदासीन' इति चाऽऽख्यायते॥१९॥

**प्रकृतिप्रवृत्तेः परार्थता**

स्यादेतत्, स्वार्थं परार्थं वा चेतनः प्रवर्त्तते, न च प्रकृतिरचेतनैवं भवितुमर्हति, तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः, न च क्षेत्रज्ञाश्चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति तेषां प्रकृतिस्वरूपानभिज्ञत्वात्, तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता, स चेश्वर इत्यत आह—

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥५७॥**

दृष्टमचेतनमपि प्रयोजनं प्रति प्रवर्त्तमानम्। यथा वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्त्तते, एवं प्रकृतिरचेतनाऽपि पुरुषविमोक्षणाय प्रवर्त्तिष्यते। न च क्षीरप्रवृत्तेरपीश्वराधिष्ठातृनिबन्धनत्वेन साध्यत्वान्न साध्यव्यभिचार इति साम्प्रतम्, प्रेक्षावतः प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात्। ते च जगत्सर्गाद् व्यावर्त्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्त्तयतः। न ह्यवाप्तसकलेप्सितस्य भगवतो जगत् सृजतः किमप्यभिलषितं भवति, नापि कारुण्यादस्य सर्गे प्रवृत्तिः। प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छाकारुण्यं, सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयदूषणं, कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति। अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान्। 'कर्मवैचित्र्याद्वैचित्र्यम्' इति चेत्, कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन। तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्युपपत्तेः तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात्। प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा कारुण्यं प्रयोजकमिति नोक्तदोषप्रसङ्गः। पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते। तस्मात्सुष्ठूक्तं 'वत्सविवृद्धिनिमित्तम्' इति ॥५७॥

[ १२ ]

## योगदर्शनम् ( पतञ्जलिकृतम् )

### (व्यासभाष्यम्)

**जगतः प्रयोजनम्** २

भोगाऽपवर्गार्थं हि तद् दृश्यं पुरुषस्येति। तत्रेष्टानिष्टगुणस्वरूपाऽ-

वधारणमविभागापन्नं भोगो भोक्तुः स्वरूपावधारणमपवर्ग इति। द्वयोरति-रिक्तमन्यद् दर्शनं नास्ति। तथा चोक्तम्, अयन्तु खलु त्रिषु गुणेषु कर्त्तृष्वकर्त्तरि च पुरुषे तुल्याऽतुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्यु-पनीयमानान् सर्वभावानुपपन्नाननुपश्यन्नदर्शनमन्यच्छङ्कत इति।

तावेतौ भोगाऽपवर्गौ बुद्धिकृतौ बुद्धावेव वर्त्तमानौ कथं पुरुषे व्यपदिश्येते इति। यथा च जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्येते, स हि तत्फलस्य भोक्तेति। एवं बन्धमोक्षौ बुद्धावेव वर्त्तमानौ पुरुषे व्यपदिश्येते, स हि तत्फलस्य भोक्तेति। बुद्धेरेव पुरुषार्था-ऽपरिसमाप्तिर्बन्धस्तदर्थाऽवसायो मोक्ष इति। एतेन ग्रहणधारणो-हापोहतत्त्वज्ञानाऽभिनिवेशा बुद्धौ वर्त्तमानाः पुरुषेऽध्यारोपितसद्भावाः। स हि तत्फलस्य भोक्तेति ॥१८॥

### अनिष्टवितर्कनिवर्तनम् २

यदाऽस्य ब्राह्मणस्य हिंसादयो वितर्का जायेरन् हनिष्याम्यह-मपकारिणम्, अनृतमपि वक्ष्यामि, द्रव्यमप्यस्य स्वीकरिष्यामि, दारेषु चाऽस्य व्यवायी भविष्यामि, परिग्रहेषु चाऽस्य स्वामी भविष्यामीति। एवमुन्मार्गप्रवणवितर्कज्वरेणातिदीप्तेन बाध्यमानस्तत्प्रतिपक्षान् भावयेत् घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपागतः सर्वभूताऽभयप्रदानेन योगधर्मः। स खल्वहं त्यक्त्वा वितर्कान् पुनस्तानाददानस्तुल्यः श्व-वृत्तेन इति भावयेत्, यथा श्वा वान्ताऽवलेही तथा त्यक्तस्य पुनराददान इति ॥२३॥

### सङ्गस्मयदोषनिवर्तनम् ३

तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्ववि-शुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते भो इहाऽऽस्यतामिह रम्यताम्, कम-नीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्यू बाधते, वैहाय-

समिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति । एवमभिधीयमानः सङ्गदोषान् भावयेद् घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्त्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः । तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः । स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्य्यामिति । स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत् ।

सङ्गमकृत्वा स्मयमपि न कुर्यादेवमहं देवानामपि प्रार्थनीय इति । स्मयादयं सुस्थितम्मन्यतया मृत्युना केशेषु गृहीतमिवात्मानं न भावयिष्यति । तथा चास्य छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति । ततः पुनरनिष्टप्रसङ्गः । एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति, भावनीयश्चार्थोऽभिमुखीभविष्यतीति ॥५१॥

[ १३ ]

## न्यायदर्शनम् ( गौतमप्रणीतम् )

### (वात्स्यायनभाष्यम् )

### इन्द्रियनानात्वप्रकरणम् ३,१

अथापि खल्वेकमिदमिन्द्रियं बहूनीन्द्रियाणि वा । कुतः संशयः—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥५२॥**

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते । नानास्थानश्च सन्नेकोऽवयवी

चेति । तेनेन्द्रियेषु संशयः इति ॥५२॥

एकमिन्द्रियम् —

त्वगव्यतिरेकात् ॥५३॥

त्वगेकमिन्द्रियमित्याह । कस्मात्, अव्यतिरेकात् । न त्वचा किञ्चिदिन्द्रियाधिष्ठानं न प्राप्तम्, न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति । यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेकमिन्द्रियमिति ।

नेन्द्रियान्तरार्थानुपलब्धेः । स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपादयो न गृह्यन्ते अन्धादिभिः । न स्पर्शग्राहकादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयः, न च गृह्यन्ते । तस्मान्नैकमिन्द्रियं त्वगिति ।

त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः । यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति नान्यः, एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति ।

व्याहतत्वादहेतुः । त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा 'त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिः' इत्युच्यते । एवञ्च सति नानाभूतानि विषयग्राहकाणि विषयव्यवस्थानात् तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात् । तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति ।

संदिग्धश्चाव्यतिरेकः । पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि । न च तेष्वसत्सु विषयग्रहणं भवतीति । तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥५३॥

न युगपदर्थानुपलब्धेः ॥५४॥

आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निकृष्टमित्यात्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद् ग्रहणानि स्युः । न च

युगपद् रूपादयो गृह्यन्ते। तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति। असाहचर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकम्। साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति ॥५४॥

**विप्रतिषेधाच्च न त्वगेका ॥५५॥**

न खलु त्वगेकमिन्द्रियम्, व्याघातात्। त्वचा रूपाण्यप्राप्तानि गृह्यन्त इत्यप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः। स्पर्शादीनां च प्राप्तानां ग्रहणाद् रूपादीनामप्राप्तानामग्रहणमिति प्राप्तम्।

प्राप्याप्राप्यकारित्वमिति चेत् आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम्। अथापि मन्येत 'प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वप्राप्तानीति', एवं सति नास्त्यावरणम्। आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चेति। दूरान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न स्यात्। अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमान्तिके च ग्रहणमित्येतन्न स्यादिति ॥५५॥

[ १४ ]

## न्यायवार्तिकम् ( उद्योतकरकृतम् )

**ईश्वरस्य जगत्कारणत्ववादः** ४,१,२१

अथायमीश्वरः कुर्वाणः किमर्थं करोति। लोके हि ये कर्तारो भवन्ति ते किञ्चिदुद्दिश्य प्रवर्तन्ते इदमाप्स्यामि इदं हास्यामि चेति। न पुनरीश्वरस्य हेयमस्ति दुःखाभावात् नोपादेयं वशित्वात्। क्रीडार्थमित्येके। एके तावद् ब्रुवते क्रीडार्थमीश्वरः सृजतीति। नन्वेतदयुक्तम्। क्रीडा हि नाम रत्यर्थं भवति विना क्रीडया रतिमविन्दताम्, न च रत्यर्थी भगवान् दुःखाभावादिति। दुःखिनश्च सुखोपगमार्थं क्रीडयन्ति। विभूतिख्यापनार्थमित्यपरे, जगतो वैश्वरूप्यं ख्यापनीयमित्यपरे मन्यन्ते।

एतदपि तादृगेव, न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते न चास्याख्यापनेन किञ्चिद्धीयत इति। किमर्थं तर्हि करोति। तत्स्वाभाव्यात् प्रवर्तत इत्यदुष्टम्। यथा भूम्यादीनि धारणादिक्रियां तत्स्वाभाव्यात् कुर्वन्ति तथेश्वरोऽपि तत्स्वाभाव्यात् प्रवर्तत इति प्रवृत्तिस्वभावकं तत्तत्त्वमिति।

तत्स्वाभाव्यात् सततप्रवृत्तिरिति चेत्। अथ मन्यसे यदि प्रवृत्तिस्वभावकं तत्त्वम्, प्रवृत्तिनिवृत्ती न प्राप्नुतः। न हि प्रवृत्तिस्वभावके तत्त्वे निवृत्तिर्युज्यत इति, क्रमेणोत्पत्तिर्न प्राप्नोति तत्त्वस्यैकरूपत्वाद् इदमिदानीं भवत्विदमिदानीं न भवत्विति न युक्तम् न ह्येकरूपात् कारणात् कार्यभेदं पश्याम इति। नैष दोषः। बुद्धिमत्त्वेन विशेषणात्। बुद्धिमत्तत्त्वमिति प्रतिपादितम्। बुद्धिमत्तया च विशिष्यमाणं सापेक्षं च न सर्वदा प्रवर्तते। न सर्वमेकस्मिन् काले उत्पादयति, यस्य कारणसान्निध्यं, तद्भवति, यदसान्निहितकारणं तन्न भवति, न च सर्वस्य युगपत्कारणसान्निध्यमस्ति, अतः सर्वस्य युगपदुत्पादो न प्रसक्तः, स खलु प्रवर्तमानो धर्माधर्मयोः परिपाककालमपेक्षते कारणान्तरोत्पादं तद्भागिनां च सत्त्वानां तत्र सन्निधानं तद्भागिसत्त्वधर्माधर्मपरिपाकं च तदप्रतिबन्धं चेति।

यत् तदीश्वरस्यैश्वर्यं किं तन्नित्यमनित्यमिति। यद्यनित्यं तस्य कारणं वाच्यं यस्य चानित्यमैश्वर्यं तस्य कारणभेदो भवति अणिमादेः एवमन्येषामपीत्यनेक ईश्वरः प्रसज्यत इति। अथानेकत्वे किं बाध्यत इति, एकस्मिन् वस्तुनि व्याहतकामयोरीश्वरयोः प्रवृत्तिर्न प्राप्नोति। अथैकमितर अतिशेते, योऽतिशेते स ईश्वरो नेतर इति। अथ नित्यमैश्वर्यम्, धर्मवैयर्थ्यम्, न तद्धर्माद्भवतीति। नित्यमिति ब्रूमः। न च धर्मवैयर्थ्यं दोषः तस्य, यो धर्म ईश्वरे नासौ तत्रैश्वर्यं करोति, किन्तु

प्रत्यात्मवृत्तीन् धर्माधर्मसन्निचयाननुगृह्णाति, न चेश्वरे धर्मोऽस्तीत्य-चोद्यमेतत् ।

तत्स्वभावानवधारणात् सन्देहः—ईश्वरः किं द्रव्यमाहो गुणादीनामन्यतम इति । द्रव्यं बुद्धिगुणत्वाद् द्रव्यान्तरवत् । बुद्धिमत्त्वात् तर्हि आत्मान्तरमिति । नात्मान्तरं, गुणभेदात् । तद्यथा गुणभेदे सति पृथिव्यादयो नात्मानः, तथा गुणभिन्न ईश्वरस्तस्मादसावपि नात्मान्तरमिति । कः पुनरेतस्य भेदः । एके तावद् ब्रुवते— धर्मज्ञानवैराग्यैश्वर्याण्यतिशयवन्ति तस्मिन्निति । नित्यत्वमतिशयः । एतत्तु न बुध्यामहे यथा बुद्धिमत्तायामीश्वरस्य प्रमाणसद्भावो न चैवं धर्मादिनित्यत्वे प्रमाणमस्ति, न चाप्रामाणिकं प्रतिपत्तुं शक्यम्, अतिशयस्तु बुद्धिनित्यत्वं गुणभेदः तत्र हि नित्या बुद्धिः सङ्ख्यादयश्च सामान्यगुणाः षड्गुण आकाशवदीश्वर इति । अथास्य बुद्धिनित्यत्वे किं प्रमाणमिति ? । नन्विदमेव—बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्तन्त इति । बुद्धिमत्तायामेतत् साधनं सा पुनर्नित्येति कुतः, प्रत्यर्थनियमासम्भवात्—ये खलु प्रत्यर्थनियता बुद्धिभेदास्ते शरीरादिकारणसान्निधाने सति भवन्ति, न त्वियं प्रत्यर्थनियता युगपदनेककार्योत्पत्तिदर्शनात् यथा स्थावरभेदस्यानेकस्य युगपदुत्पाद इति । स च प्रत्यर्थनियतबुद्धिभेदेष्वीश्वरस्य न युक्तः, संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य गुणाः ।

अथ बुद्धिमत्तयेश्वरस्य शरीरयोगमपि प्रतिपद्यते, तेनापि प्रतिपद्यमानेन शरीरादयो नित्या अनित्या वा अवश्यमेषितव्याः । यद्यनित्याः, धर्माधर्मसद्भावोऽभ्युपेयः, तदभ्युपगमे च तत्तन्त्रत्वादीश्वरो नेश्वरः स्यात् । अथ नित्यान् शरीरादीन् कल्पयसि, एवमपि दृष्टविपरीतं कल्पितं भवति, दृष्टविपर्ययं प्रतिपद्यमानेन बुद्धेर्नित्यत्वं

प्रतिपत्तव्यम् । अथ सन्तानवर्तिनीमनेकां बुद्धिमीश्वरे प्रतिपद्यसे, एवमपि न युगपदुत्पादः स्थावरादीनां प्राप्नोति । अथ ताः सन्तानवर्तिन्यः सर्वार्थाः बुद्धयो भवन्ति, एवमपि दृष्टविपरीतं कल्पितं भवति । एवं च कल्पयता बुद्धिनित्यत्वमेव प्रतिपत्तव्यम् । एतावच्चैतत् स्यात् नित्या वा सन्तानवर्तिनी न युक्ता । यदि गुणभेदाद्भेदः यदभिन्नगुणं तदेकं प्राप्नोति यथा दिक्कालाविति । नानेकान्ताद् गुणभेदान्नानात्वं ब्रूमः, न पुनर्गुणाभेदादेकत्वमिति । तथाहि अभिन्नगुणानां घटादीनां नानात्वमिति, दिक्कालयोर्गुणाभेदेऽपि कार्यभेदान्नानात्वमिति । न च बुद्धिमत्तया विनेश्वरस्य जगदुत्पादो घटत इति । सा च बुद्धिः सर्वार्थाऽतीतानागतवर्तमानविषया प्रत्यक्षा नानुमानिकी—न तत्रानुमानं नागम इति । ज्ञाननित्यत्वाच्च न संस्कारः—नित्यं विज्ञानमीश्वरस्येति न तत्र संस्कारो विद्यत इति । संस्काराभावाद् बुद्धिनित्यत्वाच्च न स्मृतिः, स्मृत्यभावाच्च नानुमानं, न दुःखमधर्मस्याभावात्, अतएव न वैराग्यमिति दुःखाभावान्न विरज्यत इति, अतएव न द्वेषो दुःखाभावादिति । इच्छा तु विद्यतेऽक्लिष्टाऽव्याहता सर्वार्थेषु यथा बुद्धिरिति ।

अथ किमयं बद्धो मुक्त इति । न बद्धो दुःखाभावादेव, अबद्धत्वान्न मुक्त इति । बन्धवान् मुच्यत इति, न च भगवति बन्धनमस्तीति अतो न मुक्त इति । आत्मान्तराणामसम्बन्धादधिष्ठातृत्वमनुपपन्नमिति चेत्, अथ मन्यसेऽर्थान्तरसमवायिनो ये धर्माधर्मास्ते न साक्षादीश्वरेण सम्बध्यन्ते न पारम्पर्येण, न चाऽसम्बद्धमधिष्ठातुं शक्यते, न चानधिष्ठितयोर्धर्माधर्मयोः प्रवृत्तिर्युक्तेति । तच्च न, अजसम्बन्धोपपत्तेः—अजः सम्बन्ध आत्मान्तराणामित्येक इच्छन्ति न चैतदिह प्रतिषिध्यत इति अप्रतिषेधादुपात्तः स इति । तं त्वजं सम्बन्धं प्रमाणतः प्रति-

पादयन्ति व्यापकैराकाशादिभिः सम्बद्ध ईश्वरः, मूर्तिमद्द्रव्यसम्बन्धित्वाद् घटवदिति। यथा घटादि मूर्तिमता घटादिना सम्बन्धित्वेन व्यापकैराकाशादिभिः सम्बध्यते तथेश्वरोपि मूर्त्तिमत्सम्बन्धीति, तस्मादयमपि व्यापकैराकाशादिभिः सम्बध्यत इति।

स पुनरात्मेश्वरसम्बन्धः किं व्यापकोऽव्यापको वा इति, अर्थाभावादव्याकरणीयः प्रश्नः। आत्मेश्वरसम्बन्धोऽस्तीत्येतदेव शक्यते वक्तुम्। स पुनरीश्वरात्मानौ व्याप्नोति न व्याप्नोतीति न व्याक्रियते। येऽप्यजं संयोगं नेच्छन्ति तेषामप्यणुमनःसंयोगोपपत्तेरस्ति सम्बन्धः, यानि प्रत्यात्ममनांसि तानि सर्वाणीश्वरसम्बद्धानीत्यतः सम्बद्धसम्बन्धोपपत्तेरात्मान्तराण्यधितिष्ठति यथाऽऽत्महस्तसंयोगप्रयत्नाभ्यां हस्ते कर्म भवति उत्पन्नकर्मको हस्तः सन्दंशादिना सम्बध्यते तत्सम्बन्धादयःपिण्डाद्यधितिष्ठति। यदि तर्हि सर्गादावीश्वरस्य कारणत्वेऽयं न्यायोऽभिहितः, इदानीमीश्वरो न कारणमिति प्राप्तम्। इदानीमपि स एव न्यायः—मृतशरीरिणां यौ धर्माधर्मौ तौ बुद्धिमत्कारणाधिष्ठिताविति समानो न्यायः। बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु महाभूतानि वाय्वन्तानि प्रवर्तन्ते—अचेतनत्वाद्वास्यादिवत्। एवं कार्यत्वात् तृणादीनि पक्षीकृत्य दर्शनस्पर्शनविषयत्वादिति वक्तव्यम्। एवं यत्र यत्र विप्रतिपत्तिः कार्यत्वं च तत्तदनेनैव न्यायेनानेन दृष्टान्तेन वास्यादिना पक्षयित्वा साधयितव्यम्। आगमाच्च, आगमादपि श्रूयते ईश्वरः कारणम्—

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥ (मभा॰ वन॰ ३०,२८)
यदा स देवो जागर्ति तदेदं चेष्टते जगत्।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति॥ (मनु॰ १,५२)

[ १५ ]

## न्यायमञ्जरी (जयन्तभट्टकृता )

### प्रमाणस्य नामस्वरूपलक्षणविचारः १,१,३

अत्रेदं तावद्विचार्यते। किं प्रमाणं नाम, किमस्य स्वरूपं किं वा लक्षणमिति। ततः तत्र सूत्रं योजयिष्यते। तदुच्यते। अव्यभिचारिणीमसन्दिग्धार्थोपलब्धिं विदधती बोधाबोधस्वभावा सामग्री प्रमाणम्। बोधाबोधस्वभावा हि तस्य स्वरूपम्। अव्यभिचारादिविशेषणार्थोपलब्धिसाधनत्वं लक्षणम्। ननु च प्रमीयते येन तत्प्रमाणमिति करणसाधनोऽयं प्रमाणशब्दः। करणं च साधकतमं तमवर्थश्चातिशयः। स चापेक्षिकः साधकान्तरसम्भवे हि तदपेक्षयातिशययोगात्किंचित्साधकतममुच्यते। सामग्र्याश्चैकत्वात्तदतिरिक्तसाधकान्तरानुपलम्भात्किमपेक्षमस्या अतिशयं ब्रूमः। अपि च कस्मिन्विषये सामग्र्याः प्रमाणत्वम्। प्रमीयमाणे हि कर्मभूतो विषयः सामग्र्यन्तरीभूतत्वात्सामग्र्येवेति करणतामेव यायात्। निरालम्बनाश्चेदानीं सर्वप्रमितयो भवेयुरालम्बनकारकस्य चक्षुरादिवत्प्रमाणान्तःपातित्वात्। कश्च सामग्र्या प्रमेयं प्रमिमीते। प्रमातापि तस्यामेव लीनः।

एवं च यदुच्यते प्रमाता प्रमाणं प्रमेयं प्रमितिरिति चतसृषु विधासु तत्त्वं परिसमाप्यते इति तद्व्याहन्यते। न च लोकोऽपि सामग्र्याः करणभावमनुमन्यते तस्यां करणविभक्तिमप्रयुञ्जानः। न ह्येवं वक्तारो भवन्ति लौकिकाः सामग्र्या पश्याम इति किं तु दीपेन पश्यामः चक्षुषा निरीक्षामहे इत्याचक्षते। तस्मान्न सामग्री करणमकरणत्वाच्च न प्रमाणमिति नेदं साधु प्रमाणस्वरूपम्। अत्रोच्यते। यत एव साधकतमं करणं करणसाधनश्च प्रमाणशब्दः तत एव सामग्र्याः प्रमाणत्वं युक्तम्। तद्व्यतिरेकेण

कारकान्तरे क्वचिदपि तमबर्थसंस्पर्शानुपपत्तेः । अनेककारकसन्निधाने कार्यं घटमानमन्यतरव्यपगमे च विघटमानं कस्मै अतिशयं प्रयच्छेत् । न चातिशयः कार्यजन्मनि कस्य चिदवधार्यते सर्वेषां तत्र व्याप्रियमाणत्वात् । सन्निपत्य जनकत्वमतिशय इति चेन्न। आरादुपकारकाणामपि कारकत्वानपायात् । ज्ञाने च जन्ये किमसन्निपत्य जनकं सर्वेषामिन्द्रियमनोऽर्थादीनामितरेतरसंसर्गे सति ज्ञाननिष्पत्तेः । अथ सहसैव कार्यजननमतिशयः । सोऽपि कस्यां चिदवस्थायां करणस्येव कर्मणोऽपि शक्यते वक्तुम् । अविरलजलधरधाराप्रबन्धबद्धान्धकारनिवहे बहुलनिशीथे सहसैव स्फुरता विद्युल्लतालोकेन कामिनीज्ञानमादधानेन तज्जन्मनि सातिशयत्वमवाप्यते । एवमितरकारककदम्बसन्निधाने सत्यपि सीमन्तिनीमन्तरेण तद्दर्शनं न सम्पद्यते । आगतमात्रायामेव तस्यां भवतीति तदपि कर्म कारकमातिशययोगित्वात्करणं स्यात्तस्मात्फलोत्पादाविनाभाविस्वभावत्वमवश्यतया कार्यजनकत्वमतिशयः । स च सामग्र्यन्तर्गतस्य न कस्य चिदेकस्य कारकस्य कथयितुं पार्यते । सामग्र्यास्तु सोऽतिशयः सुवचः, सन्निहिता चेत्सामग्री सम्पन्नमेव फलमिति सैवातिशयवती ।

ननु मुख्ययोः प्रमातृप्रमेययोरपि तदविनाभावित्वमतिशयोऽस्त्येव प्रमितिसम्बन्धमन्तरेण तयोस्तथात्वाभावात् । प्रमिणोतीति प्रमाता भवति प्रमीयते इति च प्रमेयम् । सत्यमेतत् । किंतु साकल्यप्रसादलब्धप्रमितिसंबन्धनिबन्धनः प्रमातृप्रमेययोर्मुख्यस्वरूपलाभः साकल्यापचये प्रमित्यभावाद्गौणे प्रमातृप्रमेये सम्पद्येते । एवं च साकल्यमन्तरेण प्रमितितमबर्थयोगात्तदेव करणम् । यत्तु किमपेक्षं सामग्र्याः करणत्वमिति तदन्तर्गतकारकापेक्षमिति ब्रूमः । कारकाणां धर्मः सामग्री न स्वरूपहानाय तेषां कल्पते साकल्यदशायामपि तत्स्वरूपप्रत्यभिज्ञानात् । ननु समग्रेभ्यः सामग्री भिन्ना चेत् कथं पृथङ्

नोपलभ्यते। अभेदे तु सर्वकारकाणि करणीभूतान्येवेति कर्तृकर्मव्यवहारोच्छेदप्रसङ्गः। मैवम्। समग्रसन्निधानाख्यधर्मस्य प्रत्यक्षमुपलम्भात्। पृथगवस्थितेषु हि स्थालीजलज्वलनतण्डुलादिषु न समग्रताप्रत्ययः, समुदितेषु तु भवतीत्यतस्तन्तुपटलपरिघाटितपटाद्यवयविवत्कारककलापनिष्पाद्यद्रव्यान्तराभावेऽपि समुदायात्मिका सामग्री विद्यत एवेति समुदाय्यपेक्षया करणतां प्रतिपद्यते। तस्मान्न परिचोदनीयमिदं कस्मिन्कर्मणि सामग्री करणमिति। समुदायिनां सामग्र्यवस्थायामपि स्वरूपानपायात् समुदायिविशेषे कर्मणि सामग्री करणम्।

अत एव न प्रमितेर्निरालम्बनत्वम्। एतेन प्रमाता पृथगुपदर्शित इति विधाचतुष्टयमपि समाहितम्। यत्त्वभ्यधायि सामग्र्याः करणविभक्तिनिर्देशो न दृश्यत इति। तत्रोच्यते। सामग्री हि संहतिः। सा हि संहन्यमानव्यतिरेकेण न व्यवहारपदवीमवतरति। तेन सामग्रीं पश्यामीति न व्यपदेशः। यस्तु दीपेन्द्रियाणां तृतीयानिर्देशः स फलोपजननाविनाभाविस्वभावत्वाख्यसामग्रीसरूपसमारोपणानिबन्धनः। अन्यत्रापि च तद्रूपसमारोपेण स्थाल्या पचतीति व्यपदेशो दृश्यत एव। तस्मादन्तर्गतकारकापेक्षया लब्धकरणभावा सामग्री प्रमाणम्।

अपरे पुनराचक्षते। सामग्री नाम समुदितानि कारकाणि। तेषां द्वैरूप्यमहृदयङ्गमम्। अथ च तानि पृथगवस्थितानि कर्मादिभावं भजन्ते। अथ च तान्येव समुदितानि करणीभवन्तीति कोऽयं नयः? तस्मात्कर्तृकर्मव्यतिरिक्तमव्यभिचारादिविशेषणकार्यप्रमाजनकं कारणं करणमुच्यते। तदेव च तृतीयया व्यपदिशन्ति। दीपेन पश्यामि, चक्षुषा निरीक्षे, लिङ्गेन बुध्ये, शब्देन जानामि, मनसा निश्चिनोमीति। ननु त्रीण्येव कारकाण्यस्मिन् पक्षे भवेयुः, ज्ञानक्रियायां तावदेवमेवैतद्यथा भवानाह। पाकादिक्रियासु क्रियाश्रयधारणाद्युपकारभेदपर्यालोचनया

भवत्वधिकरणादिकारकान्तरव्यवहारः । प्रमितौ तु मनोदीपचक्षुरादेर्न लक्ष्यते विशेष इति तत्सर्वं करणत्वेन सम्मतम् । कस्तेषु तमबर्थ इति चेत् ? अस्ति कश्चिद् यदयं लोकोऽहं मया जानामि घटेन घटं जानामि इति न कर्तृकर्मणी विस्मृत्यापि करणत्वेन व्यपदिशति । नयनमनोदीपशब्दलिङ्गादीनि तु तथा व्यपदिशति। सोऽयमेषां पश्यति कर्तृकर्मवैलक्षण्यं चक्षुरादीनाम् । तद्वैलक्षण्यमेव च तेषामातिशय इति । तदयमिह प्रमाणं प्रमाता प्रमेयं प्रमितिरिति चतुर्वर्गेणैव व्यवहारः परिसमाप्यते । तस्मात्कर्तृकर्मविलक्षणा संशयविपर्ययरहितार्थबोधविधायिनी बोधाबोधस्वभावा सामग्री प्रमाणमिति युक्तम् ।

ये तु बोधस्यैव प्रमाणत्वमाचक्षते, न सूक्ष्मदर्शनास्ते । बोधः खलु प्रमाणस्य फलं न साक्षात्प्रमाणम् । करणार्थाभिधानो हि प्रमाणशब्दः प्रमीयतेऽनेनेति प्रमाणम् । प्रमीयते इति कोऽर्थः ? प्रमा जन्यते इति । प्रमाणादवगच्छाम इति च वदन्तो लौकिकाः करणस्यैव प्रामाण्यमनुमन्यन्ते । यत्तु प्रमा प्रमाणमिति प्रमाणशब्दः स प्रमाणफले द्रष्टव्यः । तथा च संशयविपर्ययात्मकं प्रमाणफलमिति ज्ञानमात्ममनोऽनुमाने तद्विशेषणार्थपरिच्छेदे वा विशिष्टप्रमाणजननात्प्रमाणतां प्रतिपद्यते । अव्यभिचारादिविशेषणोपपन्नमपि ज्ञानमफलजनकमप्रमाणमेव प्रमाणमुच्यते । तदयुक्तम् । सकलजगद्विदितबोधेतरस्वभावशब्दलिङ्गदीपेन्द्रियादिपरिहारप्रसङ्गात् । तस्मात्सामग्र्यनुप्रविष्टबोधो विशेषणज्ञानमिव क्वचित् प्रत्यक्षे लिङ्गज्ञानमिव लिङ्गिप्रमितौ सारूप्यदर्शनमिवोपमाने शब्दश्रवणमिव तदर्थज्ञाने प्रमाणतां प्रतिपद्यते । अत एव बोधाबोधस्वभावा सामग्री प्रमाणमित्युक्तम् ।

[ १६ ]

## न्यायकुसुमाञ्जलिः (उदयनविरचितः)

### कर्मणां परलोकफलानामनुष्ठेयत्वम् १

अस्तु दृष्टमेव सहकारिचक्रं किमपूर्वकल्पनयेति चेन्न, विश्ववृत्तितः ।

विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥८॥

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरानिबन्धनम्, न परलोकार्थी कश्चिदिष्टापूर्त्तयोः प्रवर्त्तेत। न हि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत्। लाभपूजाख्यात्यर्थमिति चेत्, लाभादय एव किंनिबन्धनाः? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः। यतो वाऽनेन लब्धव्यं यो वैनं पूजयिष्यति, स किमर्थम्? ख्यात्यर्थमनुरागार्थश्च जनो दातरि मानयितरि च रज्यते, जनानुरागप्रभवा हि सम्पद इति चेत्। न, नीतिनर्मसाचिवेष्वेव तदर्थं दानादिव्यवस्थापनात्। त्रैविद्यतपस्विनो धूर्त्तवका एवेति चेन्न, तेषां दृष्टसम्पदं प्रत्यनुपयोगात्। सुखार्थं तथा करोतीति चेन्न, नास्तिकैरपि तथा करणप्रसङ्गात् सम्भोगवत्। लोकव्यवहारसिद्धत्वादफलमपि क्रियते वेदव्यवहारसिद्धत्वात् सन्ध्योपासनवदिति चेत्, गुरुमतमेतत्, न तु गुरोर्मतम्। ततो नेदमनवसर एव वक्तुमुचितम्। वृद्धैर्विप्रलब्धत्वाद्बालानामिति चेन्न, वृद्धानामपि प्रवृत्तेः। न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते। तेऽपि वृद्धतरैरित्येवमनादिरिति चेत्। न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात्। इदं प्रथम एव कश्चिदनुष्ठायापि धूर्त्तः पराननुष्ठापयतीति चेत्। किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति। कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः। केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः? न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः। यतः पाखण्डाभिमतेष्वप्येवं दृश्यते इति चेत्। न, हेतुदर्शनादर्शनाभ्यां विशेषात्। अनादौ चैवं भूतेऽनुष्ठाने प्रतायमाने

प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, न त्वनुष्ठानागोचरेण कर्मणा। अन्यथा प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात्।

[ १७ ]

## वैशेषिकदर्शनम् ( कणादकृतम् )

### ( प्रशस्तपादभाष्यम् )

### सृष्टि-संहार-निरूपणम् १

इहेदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते। ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः, तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्माधर्मसंस्कारानुविद्धा आत्मानस्तावन्तमेव कालम्। ततः पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति। तदनन्तरं तस्मिन्नेव जलनिधौ पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिप्रक्रमेण महापृथिवी समुत्पन्ना संहतावतिष्ठते। तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेणोत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्

देदीप्यमानस्तिष्ठति । एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याध्यानमात्रात् तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमारभ्यते तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते । स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णानन्यानि चोच्चावचानि भूतानि सृष्ट्वाशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति ।

## [ १८ ]

## न्यायावतारः (सिद्धसेनदिवाकरकृतः)

### (विवृतिः)

### वाक्यप्रामाण्यम्

**स्वनिश्चयवदन्येषां निश्चयोत्पादनं बुधैः ।**
**परार्थं मानमाख्यातं वाक्यं तदुपचारतः ॥१०॥**

स्व आत्मा तस्य निश्चयः प्रमेयाधिगमः तद्वदन्येषां प्रतिपाद्यानां निश्चयोत्पादनं प्रमेयपरिच्छेदकज्ञानप्रादुर्भावनं यथाऽऽत्मनोऽर्थनिर्णयस्तथा परेषां निर्णयजननमित्यर्थः। बुधैर्विद्वद्भिः परस्मै अर्थः प्रयोजनं येन तत् परार्थम्, मीयतेऽनेनेति मानम् । ननु च यदि निश्चयोत्पादनं परार्थमानम्, तदा ज्ञानमपि परप्रत्यायनाय व्याप्रियमाणं परार्थं प्राप्नोतीत्याह। वाक्यं परार्थं न ज्ञानं तस्यैव आनन्तर्येण व्यापारात् परप्रयोजनमात्रत्वाच्च । इतरस्य तु व्यवहितत्वात् स्वपरोपकारित्वाच्च । कथं वचनमज्ञानरूपं प्रमाणमित्याह । तदुपचारतस्तस्य ज्ञानस्य उपचारोऽतद्रूपस्यापि तदङ्गतया तद्रूपत्वेन ग्रहणम्, तत इदमुक्तं भवति—प्रतिपाद्यगतमुत्पत्स्यमानं यद् ज्ञानं तदव्यवहितकारणत्वाद् वचनमपि उपचारेण प्रमाणमित्युच्यते ॥१०॥

**प्रत्यक्षेणानुमानेन प्रसिद्धार्थप्रकाशनात् ।**
**परस्य तदुपायत्वात् परार्थत्वं द्वयोरपि ॥११॥**

प्रत्यक्षेणापि अनुमानेनेव प्रसिद्धार्थप्रकाशनात् स्वप्रतीतप्रमेयप्रत्यायनात् परार्थत्वं प्रतिपाद्यप्रयोजनत्वं द्वयोरपि प्रत्यक्षानुमानयोस्तुल्यकारणत्वान्नानुमानस्यैवैकस्येत्यभिप्रायः । तद्यथाऽनुमानप्रतीतोऽर्थः परस्मै प्रतिपाद्यमानो वचनरूपापन्नः परार्थमनुमानं तथा प्रत्यक्षप्रतीतोऽपि परार्थं प्रत्यक्षं परप्रत्यायनस्य तुल्यत्वाद् वचनव्यापारस्यैव भेदात् । तथाह्यनुमानप्रतीतं प्रत्याययन्नेवं वचनयति । अग्निरत्र धूमात् । यत्र यत्र धूमस्तत्र तत्राग्निः । यथा महानसादौ । वैधर्म्येण वा अग्न्यभावे न क्वचिद् धूमो यथा जलाशयादौ । तथा च धूमोऽयम् तस्मात् धूमादग्निरत्रेति । प्रत्यक्षप्रतीतं पुनर्दर्शयन् एतावद्वक्ति । पश्य राजा गच्छति । ततश्च वचनात् विविधादपि समग्रसामग्रीकस्य प्रतिपाद्यस्य अनुमेयप्रत्यक्षार्थविषया यतः प्रतीतिरुल्लसत्यतो द्वयोरपि परार्थता इत्याह । परस्य तदुपायत्वात् प्रतिपाद्यस्य प्रतीतिप्रतिपादकस्य प्रत्यक्षानुमाननिर्णीतार्थप्रकाशनकारणत्वादित्यर्थः । एतेन पूर्वकारिकोक्तोपचारकारणं च लक्षयति ॥११॥

**प्रत्यक्षप्रतिपन्नार्थप्रतिपादि च यद्वचः ।**
**प्रत्यक्षं प्रतिभासस्य निमित्तत्वात्तदुच्यते ॥१२॥**

यद्वचः प्रत्यक्षप्रतिपन्नार्थप्रतिपादि साक्षात्कारिज्ञानगोचरकथनचतुरं तत् प्रत्यक्षमुच्यते । वचनं कुतः प्रत्यक्षमित्याह । प्रतिभासस्य निमित्तत्वात् प्रतिपाद्यप्रत्यक्षप्रकाशहेतुत्वाद् उपचारेण उच्यते ॥१२॥

[ १९ ]

## वादन्यायः ( धर्मकीर्तिकृतः )

### सदसत्स्वरूपनिर्धारणम् १

नैव कश्चित्क्वचित्कथञ्चिदनुपलब्धोऽप्यसद्व्यवहारविषय इति चेत् । सर्वस्य सर्वरूपाणां सर्वदाऽनिवृत्तेः सर्वं सर्वत्र सर्वदा समुपयुज्येत । इदञ्च न स्यात् । इदमतो नात इदमिहेदमिह नेदमिदानीमिदमिदानीं

नेदमिदमेवमिदं नैवमिति कस्यचिदपि रूपस्य कथञ्चित्क्वचित्कदाचिद्वि-विक्तस्वहेतोरभावात् । अनन्वयव्यतिरेकं विश्वं स्यात् भेदाभावात्। अवस्थानिवृत्तिप्रवृत्तिभेदेभ्यो व्यवस्थेति चेत् । न यत एव सर्वविषयस्या-सद्व्यवहारस्याभावान्न सम्भवन्ति। यतस्तेभ्यो व्यवस्था स्यात् । क्वचि-द्विषयेऽसद्व्यवहारोपगमे स कुत इति वक्तव्यम् । न ह्यनुपलम्भादन्यो व्यवच्छेदहेतुरस्ति । विधिप्रतिषेधाभ्यां व्यवच्छेदे सर्वदानुपलम्भस्यैव साधनत्वात् । अनुपलम्भादेव तदभ्युपगमे स यत्रैवास्ति सर्वोऽसद्व्यवहार-विषय इति वक्तव्यं विशेषाभावात् । सर्वप्रमाणनिवृत्तिरनुपलब्धिः । सा यत्र सोऽसद्विषय इष्ट इति चेत् । सुकुमारप्रज्ञो देवानांप्रियो न सहते प्रमाणचिन्ताव्यवहारपरिक्लेशं येन नात्रादरं कृतवान् । न ह्यनुमानादि-निवृत्तिरभावं गमयति व्यभिचारात् । न सर्वप्रत्यक्षनिवृत्तिरसिद्धेः, नात्म-प्रत्यक्षविषयनिवृत्तिरपि विप्रकृष्टेषु । तस्मात्स्वभावविशेषो यतः प्रमाणा-न्नियमेन सद्व्यवहारं प्रतिपद्यते, तन्निवृत्तिस्तस्यासद्व्यवहारं साधयति । तत्स्वभावसत्तायास्तत्प्रमाणसत्तया इष्टेः ।

न चोपलब्धिलक्षणप्राप्तस्यार्थस्याप्रत्यक्षादन्योपलब्धिर्येनानुमाना-दस्योपलब्धिः स्यात् । न तद्रूपान्यथाभावमन्तरेणाप्रत्यक्षताऽन्यथाभावे च तदेव न स्यात् । अपि च कुत इदं मन्त्रौषधमिन्द्रजालं भावेन शिक्षितं यदयमजातानष्टरूपातिशयोऽव्यवधानादूरस्थानस्तस्यैव तदवस्थेन्द्रियादेरिव पुरुषस्य कदाचित्प्रत्यक्षोऽप्रत्यक्षश्च, येन कदाचिदस्यानुमानमुपलब्धिः कदाचित्प्रत्यक्षं कदाचिदागमः । तस्मान्नैवानतिशयेऽमीषां प्रकाराणां विरोधात् । नानतिशय एकातिशयनिवृत्त्याऽपरातिशयोत्पत्त्या च तैः व्यवहारभेदोपगमात् । सोऽतिशयस्तस्यात्मभूतोऽनवयवे निवर्त्तमानः प्रवर्त्तमानश्च कथं न स्वभावनानात्वमाकर्षयति सुखदुःखवत् । सान्वयत्वे च का कस्य प्रवृत्तिर्निवृत्तिर्वेति यत्किञ्चिदेतत् ।

अथवा यदि कस्यचित्स्वभावस्य प्रवृत्तिनिवृत्ती स्वयमप्यनुक्रियेते तदेव परो ब्रुवाणः किमिति नानुमन्यते। तस्य निरन्वयोपजननविनाशोपगमादिति चेत्। कोऽयमन्वयो नाम भावस्य जन्मविनाशयोः शक्तिः, सास्त्येव प्रागपि जन्मनो निरोधादप्यूर्ध्वं तेनायं नापूर्वः सर्वथा जायते, न पूर्वो विनश्यतीति। यदि सा सर्वदाऽनतिशया किमिदानीमतिशयवद्यत्कृतोऽयं व्यवहारविभागः। ता अवस्था अतिशयवत्य इति चेत्। ता अवस्थाः सा च शक्तिः किमेको भाव आहोस्विन्नाना। एकश्चेत्कथमिदानीमिदमेकत्राविभक्तात्मनि निष्पर्यायं परस्परव्याहतं योक्ष्यते। जन्माजन्म निवृत्तिरनिवृत्तिरेकत्वं नानात्वं प्रत्यक्षताऽप्रत्यक्षतार्थक्रियोपयोगोऽनुपयोगश्चेत्यादि। अस्ति पर्यायोऽवस्था शक्तिरिति तेनाविरोध इति चेत्। विस्मरणशीलो देवानांप्रियः प्रकरणं न लक्षयति। शक्तिरवस्थेत्येको भावोऽविभाग इति यत्कोऽयं विरोध उक्तः।

अथास्त्यनयोर्विभागो न कश्चिद्विरोधः। केवलं सान्वयौ भावस्य जन्मविनाशाविति न स्यात्। तस्माद्यस्यान्वयो न तस्य जन्मविनाशौ, यस्य च तौ न तस्यान्वयः, तयोरभेदाददोष इति चेत्। अनुत्तरं बत दोषसङ्कटमत्र भवान् दृष्टिरागेण प्रवेश्यमानोऽपि नात्मानं चेतयति। अभेदो हि नामैक्यम्, ताविति च भेदाधिष्ठानो भाविको व्यवहारो निवृत्तिप्रादुर्भावयोः निवृत्तिप्रदुर्भावौ स्थितावास्थितिरित्यादिकं नानात्वलक्षणञ्च कथं योत्स्यते। अथ हि भावानां भेद एतद्विरहश्चाभेदः, यथा सुखादिषु शक्त्यवस्थयोश्चैकात्मनि। अन्यथा भेदाभेदलक्षणाभावाद्भेदाभेदयोरव्यवस्था स्यात् सर्वत्र। तदात्मनि प्रादुर्भावोऽभेदो विपर्यये भेदः, यथा मृदात्मनि प्रादुर्भवतो घटस्य तस्मादभेदः, भेदश्च विपर्यये सुखदुःखयोरिति; इदं भेदाभेदलक्षणं तेनाविरोध इति चेत्, न वै मृदात्मनि घटस्य प्रादुर्भावः, किन्तर्हि, मृदात्मैव कश्चित् घटः;

न ह्येकस्त्रैलोक्ये मृदात्मा, प्रतिविज्ञप्तिप्रतिभासभेदश्च द्रव्यस्वभावभेदात् ।

एवं ह्यस्यापि सुखादिषु भेदावगमः समर्थो भवति । यद्येवं भेदः स्यात् । सत्यप्येतस्मिन् कस्यचिदात्मनोऽन्वयादेवमिति चेत्, सुखादिष्वप्ययं प्रसङ्गः चैतन्येषु च । न च घटादिष्वपि सर्वात्मनान्वयोऽवैश्वरूप्यसहोत्पत्त्यादिप्रसङ्गात् । न च घटं मृदात्मानञ्च कश्चिद्विवेकेनोपलक्षयति येनैवं स्यादिति नेह प्रादुर्भूतमिति । न ह्यधिष्ठानाधिष्ठानिनोर्विविधानुपलक्षणे एवं भवति । न च शक्तेः शक्त्यात्मनि प्रादुर्भाव इति तस्याः स्वात्मनोऽभेदो न स्यात् । एतेन परिणामः प्रत्युक्तः ।

[ २० ]

## तत्त्वसङ्ग्रहः (शान्तरक्षितकृतः)

### (कमलशीलकृता पञ्जिका)

### लोकायत परीक्षा

अथ क्षणिकमेवेदं परैरप्यभिधीयते ।
कथं स्वोपगमस्तेषामेवं सति न बाध्यते ॥१८८६॥
बाध्यतां काममेतत्तु न्याय्यमित्युपगम्यते ।
क्षणिकं सर्वयुक्तिभ्यः सर्वभावविनिश्चितम् ॥१८८७॥

अथेदं महाभूतचतुष्टयं परैश्चार्वाकैः क्षणिकमभ्युपगम्यते यथोक्तदोषभयात् तदाऽपि दोष एवेत्यभिप्रायः । तथाहि—न तावद् बुद्धिदेहयोः कार्यकारणभावसिद्धौ किंचित्प्रमाणमस्ति, परस्य येन तद्व्यवहारः सिध्येत् । प्रयोगः —यत्र यद्भावसिद्धौ न किंचित्प्रमाणमस्ति न तत्र तद्व्यवहारः प्रेक्षावता कार्यः, यथा वह्नौ शीतव्यवहारः । नास्ति बुद्धिदेहयोः कार्यकारणभावसिद्धौ किंचित्प्रमाणमिति व्यापकानुपलब्धिः । न चासिद्धता

हेतोः, तथाहि—प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः। स चान्वयाद् व्यतिरेकाद्वा विशिष्टादेव निश्चीयते, न दर्शनादर्शनमात्रेण। तत्रान्वयात् कार्यनिश्चये कर्त्तव्ये येषामुपलम्भे सत्युपलब्धिलक्षणप्राप्तं पूर्वमनुपलब्धं सदुपलभ्यत इत्येवमाश्रयणीयम्, अन्यथा हि यद्युपलब्धिलक्षणप्राप्तमनुपलब्धमित्येवं नापेक्षेत, तदा तत्र कार्यस्य प्रागपि सत्त्वमन्यतो वा देशेऽपगमनं सम्भाव्येत।

येन कारणात् प्रागवस्थिताः कुड्यादयस्तेषां कारणता न निषिद्धा स्यात्। उपलब्धिलक्षणप्राप्तानुपलम्भोपदर्शने तु सा निषिद्धा भवति। तत्र तस्या व्यभिचारात्। एवं तावदन्वयात् कार्यनिश्चयः। व्यतिरेकादपि कार्यनिश्चये सत्सु तदन्येषु समर्थेषु तद्धेतुषु यस्यैकस्याभावे न भवतीत्येवमाश्रयणीयम, अन्यथा हि केवलं तदभावे न भवतीत्युपदर्शने संदिग्धमत्र तस्य सामर्थ्यं स्यात्, अन्यस्यापि तत्समर्थस्याभावात्, ततश्चैवमपि सम्भाव्येत—अन्यदेव तत्र समर्थमस्ति, तदभावात् तन्निवृत्तम्, यत्पुनरेतान्निवृत्तौ सत्यामस्य निवृत्तिरुपलभ्यते सा यदृच्छासंवादः। मातृविवाहोचितदेशजन्मनः पिण्डखर्जूरस्यान्यत्र देशे मातृविवाहाभावे सत्यभाववत्। तस्मात् समर्थेष्विति विशेषणीयम्। एवं हि तस्यैव कारणत्वं निश्चीयते, तद्व्यतिरेकस्यैवानुविधानात्। नह्यनुपकारिणो व्यतिरेकः केनचिदनुविधीयतेऽतिप्रसङ्गात्। एवमन्वयव्यतिरेकाभ्यामसंदिग्धं कार्यकारणत्वं प्रतीयते नान्यथा। न चेदृशोऽन्वयो व्यतिरेको वा कायचित्तयोर्निश्चितोऽस्ति। तथाहि—न तावत् स्वदेहबुद्ध्योरन्वयनिश्चयः शक्यते कर्तुं गर्भादौ प्राक्चित्तोत्पत्तेः केवलकायोपलम्भाभावात्, नहि चित्तमन्तरेणोपलम्भो भवति। परशरीरेऽपि चेतसोऽनुपलब्धिलक्षणप्राप्तत्वान्न पौर्वापर्यग्रहणमस्ति। ततो नान्वयनिश्चयः। नापि व्यतिरेकनिश्चयः।

तत्रापि हि न तावदात्मदेहव्यतिरेकेण स्वबुद्धिव्यतिरेको ज्ञातुं शक्यः, सर्वथा स्वयमभावात् । नापि परदेहव्यतिरेकेण तत्सम्बन्धिन्या बुद्धेर्व्यतिरेको निश्चेतुं पार्यते । तद्‌बुद्धेरनुपलब्धिलक्षणप्राप्तत्वेन देहनिवृत्तावपि बुद्धिव्यतिरेके संशयात् । अतएव कुड्यादौ देहाभावेऽपि न बुद्धिव्यतिरेकनिश्चयः । तत्रापि तत्सत्तायामनुपलब्धिलक्षणप्राप्तत्वेन संशयात् । परिस्पन्दादिकार्यादर्शनादप्यभावनिश्चयो न युक्तः, नावश्यं हि कारणानां कार्यवत्त्वम् अपि च देहविशेषपरिग्रहहेतोस्तृष्णाविपर्यासलक्षणस्य स्वकारणस्याभावात् किं तत्र कुड्यादौ बुद्धेरभाव आहोस्विद्देहव्यतिरेकादिति संशयः । तस्मान्नासिद्धो हेतुः । नापि विरुद्धः, सपक्षे भावात् । नाप्यनैकान्तिकोऽतिप्रसङ्गात्, प्रेक्षावत्त्वहानिप्रसङ्गाच्च । तत्र तर्हि बुद्धेर्न देहः कारणमित्यत्र किं बाधकं प्रमाणमिति चेन्न, समस्त्येव प्रमाणम् । तथा च मनोमतेर्न देहः कारणमित्यत्र स्वतन्त्रा मानसी बुद्धिरित्यादिना प्रमाणमुपदर्शयिष्यति । तस्या एव देहान्तरप्रतिसन्धानं प्रत्याधिपत्त्यादेहानाश्रितत्वे सिद्धे परलोकसिद्धेः । किं च—मनोमतेर्देहः कारणं भवतु, एकोऽवयविरूपो वा भवेदनेको वा परमाणुसंचयात्मकः, यद्वा—सेन्द्रियोऽनिन्द्रियो वा, किमुपादानकारणमाहोस्वित्सहकारिकारणमिति विकल्प्यते तत्र न तावदेकोऽवयवी युक्तः, तस्य पूर्वनिषिद्धत्वात् । चतुर्महाभूतात्मकत्वहानिप्रसङ्गाच्च, न ह्येकस्य स्वभावचतुष्टयं युक्तमनेकव्यवहारोच्छेदप्रसङ्गात् । न च स्यादनेकपरमाणुसंचयात्मकोऽङ्गीकर्त्तव्यः । ते च परमाणवः प्रत्येकं वा हेतवः स्युः समुदिता वा । न तावत्प्रत्येकम्, प्रतिबीजाङ्कुरोत्पादवत्प्रतिपरमाणुविकल्पोत्पत्तिप्रसङ्गात् । नापि समुदिताः, नासिकाद्येकाङ्गवैकल्येऽपि मानसानुत्पादापत्तेः, क्षित्यादीनामन्यतरापायेऽङ्कुरानुत्पत्तिवत् ।

न हि सामग्रीप्रतिबद्धं कार्यमन्यतराभावे भवति, तत्प्रतिबद्धस्वभावत्वहानिप्रसङ्गात्। अथ यथासन्निधानं सर्वेऽपि चैतन्यस्य हेतवः। एवं तर्हि विकलाविकलाङ्गदेहजनितयोर्विशेषेण भवितव्यं कारणभेदात्। अन्यथा कार्यस्य भेदो निर्हेतुकः स्यात्। न वाऽविकलाङ्गस्य सतः पश्चाद्विकलाङ्गतायामुपजातायां कश्चिन्मनोमतेर्विशेषोऽस्ति। श्रुतादिसंस्कारस्य तदानीमप्यविकलस्यैवानुवृत्तेः। गजादिदेहवर्त्तिनी च मनोमतिरतिशयवती प्राप्नोति, न मनुष्यधीः। ये बाल्यशरीरमनुजन्मानस्ते मन्दाधियः, महाशरीरास्तु पटुधियः। कारणस्य निर्ह्रासातिशयाभ्यां कार्यस्य निर्ह्रासातिशययोगदर्शनात्। न हि यद्भेदाद्यस्य भेदो न भवति, तत्तस्य कार्यं युक्तमतिप्रसङ्गात्। कार्यभेदस्य च निर्हेतुकत्वप्रसङ्गाच्च। नापि सेन्द्रिय इति पक्षः। तथा हीन्द्रियात् प्रत्येकं वा मनोमतिः स्यात्समस्ताद्वा। न तावत्प्रत्येकम्, एकैकेन्द्रियापायेऽपि मनोमतेरविकलत्वात्। तथाहि—प्रसुप्तिकादिरोगादिना कार्येन्द्रियादीनामुपघातेऽपि मनोधीरविकृतैकाऽविकलां स्वसत्तामनुभवति। न च यस्य विकारेऽपि यन्न विक्रियते तत्तत्कार्यं युक्तमतिप्रसङ्गात्। किं च, चक्षुरादिविज्ञानवत्प्रतिनियतार्थग्राहिता निर्विकल्पकत्वमर्थसन्निधानसापेक्षप्रवृत्तिकता च प्राप्नोति, अभिन्नकारणत्वात्। युगपदनेकविकल्पोत्पत्तिप्रसङ्गाच्च। नापि समस्तादिति पक्षः। एकेन्द्रियाभावेऽप्यभावप्रसङ्गात्। एकसहकार्यपायेऽङ्कुराद्यपायवत्। नाप्यनिन्द्रिय इति पक्षः। कलेवरच्युतस्यापि पाण्यादेस्तद्धेतुत्वप्रसङ्गात्। विशिष्टस्य हेतुत्वे सेन्द्रिय एवेष्टः स्यात्।

न हि सेन्द्रियादन्यो विशिष्टः शक्यते दर्शयितुम्। नाप्युपादानकारणमिति पक्षः। तथाहि—यः कार्यगताशेषविशेषानुयायिनः स्वभावस्य सदा चात्मसत्ताप्रत्युपस्थानतस्तदुपकारी यस्य विकारापादनमन्तरेण कार्यमशक्यविकारं स एव कारणविशेष उपादानत्वेन प्रसिद्धः। यथा

पूर्वपूर्वो मृदात्मा कलाप उत्तरोत्तरस्य घटसंज्ञितस्य कार्यकलापस्योपादानम् । अत एव यो यद्विकारयितुमिच्छति स तदुपादानविकारेणैव तद्विकारयति नान्यथा। न ह्युपादाने पूर्वस्मिन्नप्रतिबद्धसामर्थ्ये सति कार्यस्योत्तरस्योत्पित्सुनः केनचित् प्रतिघातः शक्यते कर्तुम् । यथा घटादेरुत्तरस्योत्पत्स्यमानस्य कार्यस्य पूर्वकं मृदात्मानमप्रतिबद्धासमर्थक्षणोत्पादनतः शक्यते न विकारापादनं कर्तुम् । सर्वत्रैव च विकारोत्पादनेऽयमेव क्रमो यदुतासमर्थान्तरोपादानक्षणोत्पादनम्, अन्यथा न किंचित्साक्षाद्विरुद्धं सम्भवति । यदि हि सम्भवेत् कार्यस्यापि कारणविकारापादनवत्साक्षाद्विकारापादनं स्यात्, नोपादानविकारापादनद्वारेणैव ।

यत्पुनः प्रदीपमधिकृत्यैव देशान्तरवर्त्तिन्यास्तत्प्रभाया अन्तरावरणेन विकारापादनं क्रियते, तन्न तस्याः साक्षात्प्रदीप उपादानकारणम् । किं तर्हि ? पूर्वपूर्वः प्रभाक्षणः । तथैवासमर्थक्षणान्तरोत्पादनलक्षणविकारापादनात् । आवरणेन प्रभा प्रतिहन्यते । यत्पुनर्वस्त्वधिकृत्यैव यद्विकार्यते न तत्तदुपादानं, यथा गवयमधिकृत्य गौर्विकार्यमाणः । अविकृत्य च शरीरं मनोमतेरनिष्टाचरणादिना दुर्मनस्कतादिलक्षणस्य विकारस्योपादानं क्रियत इति व्यापकविरुद्धोपलब्धिः । ननु चाहारश्चापाकादिना देहस्य पुष्ट्यादिविकारे सति रागादिलक्षणा मनोमतेर्विकारापत्तिर्दृश्यत एव । यदि नाम दृश्यते ततः किम् । नह्येतावता हेतोरसिद्धत्वम् ।

# शोध-पत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५१ | ११ | औचिध्यः | औचथ्यः |
| ५७ | १९ | रूयिः | रयिः |
| १०५ | शीर्षके | अथर्वतेदः | अथर्ववेदः |
| १३५ | २१ | वाऽर्षम् | वाऽऽर्षम् |
| १५६ | ४ | पुत्रपोत्रान् | पुत्रपौत्रान् |
| २१६ | ९ | मन्त्रयोग° | मन्त्रयाग° |
| २१९ | २२ | उच्छषेण° | उच्छेषण° |
| २२३ | १३ | ऋणत्रयापाऽकृतिः | ऋणत्रयाऽपाकृतिः |
| २२६ | १९ | तेनासत्रा | तेनासर्वौ |
| २२८ | १८ | नीधीत | नाधीते |
| २४० | १८ | प्रतिहतर् | प्रतिहर्तर् |
| २५३ | ७ | सर्वमित्यातो | सर्वमित्यथातो |
| २५४ | ४ | दैवाऽऽसुरो° | दैवासुरो° |
| ३०८ | १० | °घाण° | °घ्राण° |

